राजा—अघटितघटनापटीयसी क्रियाशक्तिश्शैलूषीव असन्त्यपि जगन्ति सत्यभूतानीव दर्शयति। महापुरुषमपि वञ्चयति। पश्य;

क्रियाशक्त्या सोऽयं बहुतरविचित्रार्थघटना-
पटीयस्या देवो विगतसुखसार्वज्ञ्यविभवः।
पयः पूर्णे कुम्भे प्रतिफलितमार्तण्डसदृशः
पराधीनो भाति प्रतिनियतकर्मार्जितगतिः॥ ३४॥

प्रज्ञा— किमर्थमेषाऽशेषजगदाराध्यमेनं प्रतारयति।

राजा:—क्रियाशक्तिः न किञ्चिदपि प्रयोजनमुद्दिश्य प्रवर्तते। स्वभाव एव खल्वयं विलासिनीनाम्। पश्य;

[1]निर्भर्त्सयन्ति मदयन्ति विडम्बयन्ति
सम्मोहयन्ति रमयन्ति विषादयन्ति।
एताः कुरङ्गनयना न समाचरन्ति
संविश्य किं सकरुणं हृदयं नराणाम्॥ ३५॥

अस्ति चापरमपि कारणम्। क्रियाशक्तिः स्वभर्तरि ज्ञानशक्तिसुतेषु अस्मासु अयमनुरक्तो भविष्यतीत्यविश्वस्ता स्वतनयानेव तत्पदे निवेशयामीति मनीषया अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाख्य-कोशदुर्गपञ्चकपरिवृतनवद्वाराणि पुराणि रचयित्वा,

तापत्रयाखिलतुषानलभीषणेषु
कारागृहेष्विव पुरेषु मलोदरेषु।
पुण्यं पुराणपुरुषं बहुधा विभज्य
संवेश्य सा स्वतनयानधिपांश्चकार॥ ३६॥

प्रज्ञा—यद्येवमस्मत्स्वामिनः कारागृहनिक्षिप्तस्य परमेश्वरस्य कथं वा विनिष्क्रान्तिर्भविष्यति।

---

[1] एतच्छायात्मकं पद्यं पञ्चतन्त्रे दृश्यते-१-२०३

राजा—त्वत्साहाय्येनैवाहं कामादीन् दृढतरं बन्धयामि। ततश्च क्रियाशक्तिं मन्मातरि ज्ञानशक्तौ विलयावस्थापन्नां करिष्यामि। ततश्च शिवभक्तिरुत्पद्यते। तया च मोक्षो भविष्यति। तथाहि—

यया पुराणः परमेश्वरोऽसौ संस्थापितो घोरपुरेषु बध्वा।
पापीयसीं तां ससुतां हनानि भक्त्या भवेत्क्षिप्रममुष्य मोक्षः ॥ ३७ ॥

तथैव भवतु। तत्कार्यसाधनायास्मत्सचिवान् शमदमादीनुत्तेजयाम।

(निष्क्रान्तास्सर्वे)

इति श्रीमल्लनाराध्यविरचिते शिवलिङ्गसूर्योदयनाम्नि नाटके

प्रथमोऽङ्कः

## ॥ द्वितीयोऽङ्कः ॥

ततःपरं महामोहोद्योगो भविष्यति ।

(ततो दम्भः प्रविशति)

दम्भः—आज्ञापितोऽस्मि महामोहराजेन यथा; वत्स दम्भ! प्रतिज्ञातं सामान्येन सुज्ञानेन शिवलिङ्गसूर्योदयाय। प्रेषिताश्च तेषु तेषु तीर्थेषु शमदमादयः। इदानीमस्माकमुपस्थितप्रायः कुलक्षयो भवद्भिरवहितैः प्रतिकर्तव्यः। तत्र पृथिव्यां परममुक्तिक्षेत्रं श्रीशैलं नाम दिव्यक्षेत्रम्। तद्भवान् तत्र गत्वा सर्वेषामपवर्गविघ्नाय प्रयततामिति। तदिदानीं वशीकृतप्रायं मया श्रीशैलक्षेत्रम्। सम्पादितश्चास्मत्प्रभोर्यथोक्त आदेशः मदधिकृतैरिदानीम्।

वेश्याक्रीडासु हालाकलितमुखमरुद्गन्धसम्बन्धरम्यैः
नीत्वा रात्रीरुदारैर्मदनकदनजैरुत्सवैश्शोणनेत्राः।
नित्यं क्षीराग्निहोत्रा (?) इति जगदखिलं कल्पितं माययेति
प्रातःस्नात्वा वदद्भिर्निखिलजनततिर्मुह्यते धूर्तसङ्घैः ॥ १ ॥

(विलोक्य) कोऽप्ययं पातालगङ्गामुत्तीर्य सम्प्रत्यमुमेव देशमुद्दिश्यायाति। यथा चायम;

जल्पत्ययं मानधनः पुमानिव
ग्रसन्निवा[क्ष्णा] जगतामपि त्रयम्।
वाग्विभ्रमैर्भर्त्सयतीव सर्वाः
सूत(?)स्समायाति धिया हसन्निव ॥ २ ॥

तथा तर्कयामि। नूनमयं द्रमिलदेशादागतो भविष्यतीति;

सालस्कन्धसमुच्छ्रिताअतिधवलच्छिद्रोर्ध्वपुण्ड्रान्तरा
दीप्यत्कुङ्कुमचूर्णचिह्नितमहाफालप्रदेशो वटुः।
सन्तप्तायसशङ्खचक्रकिणयुक् पीनोन्नतांसद्वयः
सोऽयं भागवतप्रबन्धकलनाविश्रा[न्ति]भूमिर्युवा ॥ ३ ॥

तदिदानीमस्मत्प्रपूज्यस्य अहङ्कारस्य[वृत्ता]न्तमाकलयामि इति परि-क्रामति।

(ततः प्रविशत्यहङ्कारः)

अहङ्कारः—अहो मूर्खबहुलं जगत। तथाहि ;

नाकाणि पाणिनिमतं न च गौतमीयं
नाश्रावि भट्टगुरुतन्त्रयुगं कदापि।
न व्याससूत्रहृदयं विदितं गभीरं
सम्मुह्यते जगदशेषमतीव धूर्तैः॥ ४॥

(विलोक्य) एते तावदर्थनिर्णयासमर्था वेदाध्ययनमात्रासक्ताः वेदविप्ला-वका एव। (पुनरन्यतो गत्वा) एते करपात्रमात्राचरिततुर्याश्रमव्रताः पण्डितम्मन्याः ब्रह्मसूत्रभाष्याणि व्याकुलयन्ति। (विहस्य)

वल्मीके घटवच्चराचरमिदं विश्वं सदा भासते
ब्रह्मण्यद्वयचित्सुखात्मनि परे स्वाविद्यया कल्पितम्।
प्रत्यक्षार्थविरुद्धवादकुशला वेदान्तिनश्चेत्तदा
बौद्धैराचरितं किमप्रियमहो ये पण्डितैर्निन्दिताः॥ ५॥

अतश्चैतैस्सम्भाषणमत्यन्तदुरितोदयाय। (पुनरन्यतो गत्वा) एते सौर-शाक्तगाणपत्यादयः अनधीतपूर्वोत्तरतन्त्राः श्रुतिस्मृतिविरुद्धाचाराः स्वस्वभाष्यमाणजनतातिकुच्छ्ररौरवादिनरकपदाः दूरतः परिहरणीया एव। (पुनरन्यतो गत्वा, विलोक्य)

स्थूलसूक्ष्मचिदचिद्विशिष्टयोः
नास्ति भेद इति केचिदूचिरे।
ये त्रिदण्डिशिखिमुण्डिनो नरा-
स्तन्मतं मनसि मे न रोचते॥ ६॥

अतस्ते द्वैताद्वैतमार्गपरिभ्रष्टाः यदृच्छाप्रसारितदृष्टिपथाददतिदूरीकर-णीयाः। (पुनरन्यतो गत्वा सकौतुकं विलोक्य)

रिङ्गद्दाङ्गतरङ्गसङ्गशिशिरप्रोत्तुङ्गकूलद्रुम-
च्छायास्तीर्णकुशासनोपरिलसत्पद्मासनेषु स्थिताः।
सालग्रामशिलाभिषेकसलिलव्यग्राग्रभागोज्ज्वल-
द्विश्वस्ता करदत्तवित्तमधिकं गृह्णन्त्यहो डाम्भिकाः॥ ७॥

(पुनरन्यतो गत्वा)

सितत्रिपुण्ड्रोज्ज्वलफालनेत्राः रुद्राक्षमालाभरणाः प्रशान्ताः।
केऽमी जपन्त्यत्र निमीलिताक्षाः पाणिप्रदेशस्थितशैवलिङ्गाः॥ ८॥

एते दक्षाध्वरध्वंसकरणप्रवृत्तातिरौद्रवीरभद्रा इव लक्ष्यन्ते। तदत्यन्त-धूर्तानेतान् दूरादेव परिहरिष्यामः। (पुनरन्यतो गत्वा) अये, कस्यैतत तोरणोपान्तनितान्तविन्यस्तशस्त्रशङ्खचक्रविराजमानस्निग्धसुधाविलिप्त-कुड्यप्रदेशं पिष्टपशु[मया]ध्व[रा]नवरतप्रयोगाग्निष्टोमीयादिसवनायत-नापतदाज्यगन्धगन्धिलावाच्छन्नाभ्रङ्कषधूममलिनितगगनमण्डलं स्रुक्पाला-ग्निहो[त्रारणी]शूर्पकृष्णाजिनादिविविधाध्वरायुधसम्भारसम्भरितं पा-तालगङ्गातटनिकटे विभात्यश्रगपदम्। नूनमिदं कस्यापि गृहमेधिनो गृहं भविष्यति। भवत्वस्माकमतीवानन्दश्च षट्दिवसनिवासाय योग्य-माश्रमपदमिति। (प्रवेशनं नाटयति विलोक्य)

अये;

मृच्चिह्नितोदरललाटकपोलतालु-
कक्षाक्षिमूलजघनोरुकटिप्रदेशः।
हस्ताग्रक[र्ण]युगमूलशिखाग्रदीप्य-
द्दर्भाङ्कुरस्स्पृशति मूर्त इवै[ष] दम्भः॥ ९॥

भवतूपसर्पयाम्येनम्। (उपसृत्य) मङ्गलं भवताम्। (दम्भः कोपेन निवारयति)

(प्रविश्य वटुः)

वटुः;—ब्रह्मन्! दूरे तावत स्थीयताम्। यतः; पादौ प्रक्षाल्याश्रमपदं प्रवेष्टव्यम्।

अहङ्कारः—(सामर्षम्) आः पारशीकदेशं प्राप्ता वयम। यत्रातिथीन् चतुर्वेद-पारगान षट्शास्त्रवल्लभान् अर्घ्यपादयादिभिर्गृहमेधिनो नोपतिष्ठन्ते।

दम्भः—(सहासं पाणिसंज्ञया समाश्वासयति)

वटुः—एवं पुराविदो वदन्ति, दूरदेशादागतस्य आर्यस्य कुलशीलादिकं सम्यगस्माकं न विदितम् ।

अहङ्कारः—आः पापिन्, कथमस्माकमपि कुलशीलादिकमिदानीं परीक्षणीयम् ? श्रूयताम् रे ;

> राष्ट्रं द्राविडमुत्तमं सुविदिता तत्रापि काञ्चीपुरी
> स्वर्णश्रेष्ठकनामधाम परमं तत्रास्मदीयः पिता ।
> पुत्राः सच्चरिताः सभासु विदिताः कन्या सुशीला शुभा
> तेषां सत्कुलशीलसौख्यविनयाचारैरहं चाग्रणीः ॥ १० ॥

दम्भः—(वटुं पश्यति प्रवेशयेति)

वटुः—सुवर्णकलशं गृहीत्वा चरणक्षालनं विधीयताम् ।

अहङ्कारः—भवतु नाम, को विरोधः ? तथैव करोमि । (तथैव विधायोपसर्पति)

दम्भः (दन्तान् सम्पीडय) माणवक, दूरे तावत् स्थीयताम् । शरीरलग्नाः प्रस्वेदकणाः प्रसर्पन्ति ।

अहङ्कारः—अहो, इदमाभिजात्यम् ।

वटुः—ब्रह्मन्नेवमेतत् । तथाहि ;

> राजानः स्वकिरीटहेममयसत्पात्रान्तरालस्थितैः
> माणिक्यामलदीप्तिदीपकणिकाजालैर्ज्वलद्भिर्भृशम् ।
> स्नातं धौतधृतोत्तरीयमनघं संवीक्ष्य दूरे स्थिताः
> सच्छिष्या इव पादपीठनिकटं नीराजयन्त्यादरात् ॥ ११ ॥

अहङ्कारः—(स्वगतम्) दम्भयोग्योऽयं देशः । भवतु । (प्रकाशम्) अस्मिन्नेवासने उपविशामि ।

वटुः—नैवं नैवम् । भगवत्पादानामासनमन्यैर्नाक्राम्यते ।

अहङ्कारः—(सक्रोधम्) आः पाप; काञ्चीपुरवासिभिरस्माभिरपीदमासनं किं नाक्रमणीयम्। श्रुणु, रे धूर्त;

माता सीतेति सीतातुलितगुणगणा रामचन्द्रेण तुल्य-
स्तातो मे रामचन्द्रः कुलमतिविदितं सोऽहमाम्नायवेत्ता।
यस्यास्सापत्न्यमातुस्स्वसृदुहितृसुताजारिणीत्युक्तमात्रा-
त्पत्नी साध्वी सुशीला बहुसुतजननी प्रोज्झिता सा प्रियाऽपि ॥ १२॥

दम्भः—ब्रह्मन्! भवान् तादृशोऽप्यविदितवृत्तान्तोऽस्माकम्। तथाहि;

प्रोत्तस्थुः कनकासनानि मुनयो हित्वापि हर्षान्विताः
विष्णोर्लोकमुपागते मयि परं द्रष्टुं समुत्कण्ठया।
कृष्णेनाह[मवारणीय] शपथैराकर्षितो दुस्सहै-
र्गोपीचन्दनवारिशोधितनिजोत्सङ्गे प्रतिष्ठापितः ॥ १३ ॥

अहङ्कारः—अहो दाम्भिकस्यात्युक्तिः। (सविमर्शं सामर्षं विचिन्त्य) अथवा दम्भोऽयम्। अस्त्वेवं तावत्। आः पापिन्! किमेवमपलपसे।

ब्रह्माण्डानि लयं ययुर्जलनिधौ डिण्डीरवः को न्ववं
देवेन्द्रः क्व नु पद्मभूः क्व नु, तथा विष्णुश्शुकादयाः क्व नु।
आद्यायाः प्रकृतेस्सुतस्य महतः पुत्रोऽहमत्युत्तमः
केऽमी दम्भ! भवादृशोऽतिशिशवः स्थातुं पुरस्तान्मम ॥ १४ ॥

दम्भः — आश्चर्यमाश्चर्यम्। पूर्वं काञ्चीपुरनिवासिनोस्सीतारामचन्द्रयोः पुत्रोऽहमित्युक्तं भवता। इदानीं मूलप्रकृतिपुत्रस्य महत्तत्त्वस्य पुत्र इति कथमुच्यते?।

अहङ्कारः—यः पूर्वमयोध्यायां कौसल्यादशरथयोः पुत्रत्वेन सञ्जातो रामभद्र एव देवकीवसुदेवयोः कृष्णरुपेण पुनस्सञ्जातो विदितपूर्वजन्मवृत्तान्तः पुत्रोऽभूदिति पुराणविदो वर्णयन्ति। एवमेव महत्तत्त्वसुतोऽप्यहं काञ्चीपुरे पुनस्सञ्जातो विदितपूर्वजन्मवृत्तान्तः।

दम्भः—(विलोक्य सादरम्) अयि विद्वत्पुत्र! त्वमस्माकं कूटस्थः। पितामह! दम्भनामा लोभात्मजोऽहं भो अभिवादये।

अहङ्कारः—वत्स ! आयुष्मान्भव। त्वं बालोऽसि खलु मया कलियुगादौ दृष्टः। इदानीं चिरकालव्यवधानेनातिवृद्धत्वाद्भवन्तं सम्यक्प्रत्यभिज्ञातुं न शक्नोमि। अथ त्वत्पुत्रस्यानृतस्यापि कुशलम् ?।

दम्भः—अथ किम् ? सोऽप्यत्रैव स्थितः। तमहं हित्वा मुहूर्तमपि कुत्रचित् स्थातुं न शक्नोमि ।

अहङ्कारः—तृष्णया तव जनन्या सहितो लोभाख्यस्तव पिता कुत्र वर्तते ?।

दम्भः—सोऽप्यज्ञानस्य महाराजस्याज्ञयाऽत्रैव निर्बाधमास्ते। आर्यपुत्र ! तैरस्माभिः भवत्प्रसादः स्वीक्रियते। तदाज्ञाप्यताम् ।

अहङ्कारः—आः वत्स । अज्ञानस्य अस्मत्स्वामिनः सुज्ञानात्पराजयस्समागमिष्यतीति श्रुत्वास्मदधिकारिणा मोहेनाज्ञप्तम। तत् वृत्तान्त भवतां निवे[दयि]तुमागतोऽस्मि ।

दम्भः—विदुषस्ते कुशलमेव । अस्मत्स्वामी महामोहः कुत्र वर्तते ?।

अहङ्कारः—इन्द्रलोकं स्वायत्तीकृत्यात्र श्रीशैलक्षेत्रमागन्तुमुद्युक्तः भवत्समीपं मां प्रेषितवान ।

दम्भः—किमत्र मोहागमनकारणम् ?।

अहङ्कारः—ननु आर्य, सुज्ञानोपरोध एव। तथा हि—

> यद्दीक्षा शिवलिङ्गसूर्यजनकस्थानं जपार्चाचण-
> श्रीवीरव्रतनिष्ठशैवविबुधश्रेष्ठप्रजाधिष्ठितम् ।
> क्षेत्रं श्रीगिरिनाम विश्रुतमतस्तत्रास्मदीयान्वय-
> क्षेमायैवमियेष मोहनृपतिस्तीर्थे वसामि स्थिरम् ॥ १५॥

दम्भः—(सभयम्) अद्यैवं सुज्ञानोपरोधप्रतीकारायैव अयमर्थः। यतः—

> तप्त्वा तपस्सुतमवाप शिलादयोगी
> श्रीपर्वतं परमशाम्भवमत्युदग्रम् ।

तद्दर्शिनीं परगुरुश्शिव एव साक्षा-
द्भूत्वा ददाति शिवलिङ्गमनन्तमाद्यम् ॥ १६ ॥

अहङ्कारः—सत्यमेवैतत् । (नेपथ्ये) भो भो एष खलु सम्प्राप्तोऽयं महामोहः।
तेन हि—

रथ्यास्सम्मार्जयन्तां मृगमदकलितैर्वारिभिस्सेचयन्तां
तूर्याण्युद्घोषयन्तां पटुपटहगणांस्ताडयन्तां सलीलम् ।
रम्भास्तम्भान् सकुम्भान् सुरधनुरुपमान् तोरणान् स्थापयन्ताम
वेश्याश्चानर्तयन्तां भरतनिरतहृद्गायका गानयन्तां ॥ १७ ॥

अहङ्कारः—आर्य, प्रत्यासन्नोऽयं महाराजः । तत्तूर्णं प्रत्युत्थानादिभिस्सम्भा
व्यताम् ।

दम्भः—तथैव भवतु । (इति निष्क्रान्ताः)

॥ शुद्धविष्कम्भः ॥

(ततः प्रविशति महामोहः विभवतः परिवारश्च)

हामोहः—(विहस्य) अहो निरर्गला जडबुद्धयः ।

शरीरान्निष्क्रम्य व्रजति परलोकं किल पुमान्
ततस्तस्मिन् भुङ्क्ते स्वकृतफलमायाति च पुनः ।
इति भ्रान्ताः शान्ताः श्रवणमननादौ जडधियो
निदाघेऽत्युष्णार्ता विफलमृगतृष्णा इव मृगाः ॥ १८ ॥

इदं च स्वबुद्धिनिर्मितकुयुक्तिकलापमात्रपरिकल्पितवस्त्ववष्टम्भेन अशेषं
विश्वं प्रतारकैः प्रतार्यते । तथाहि :—

सर्वप्रत्यक्षसिद्धं जगदखिलमिदं शुक्तिरौप्येण तुल्यं
ब्रह्मैवैकं तु सत्यं गुणगणरहितं येन केनाप्यदृष्टम् ।
एवं नूनं वदद्भिर्निखिलजनततिर्मुह्यते धूर्तसङ्घै-
र्नीत्वास्मान दूरदूरं स्ववचननिकरैरास्तिका नास्तिकैस्तैः ॥ १९ ॥

सत्यत्वं च परोक्षवस्तुनि मृषा तस्मिन्वदन्त्यास्तिकाः
यत्पन्थानमुपैति जातु न दृशोर्निन्दां वृथा नास्तिकाः।
नीता ब्रूत यथार्थतो यदि पुनर्दग्धे वपुष्यास्तिकैः
जीवः किं पृथगस्ति कोऽपि वपुषो हा हा कदा दृश्यते ॥ २० ॥

अपि च, न केवलं देहात्मवाद एव वाऽमीभिर्वञ्च्यते। अपि तु अस्मत्सर्वसिद्धान्तोऽपि व्याकुलितः। तथा हि—

अङ्गं रक्तास्थिमांसत्वगुपचितमिदं सर्वथाप्येकरूपं
कन्या कान्ता स्वकीया सकलमपि धनं चौर्यतो वापि भोज्यम् ।
अस्मद्वृद्धैकहृदयं निखिलमपि वृथा व्याकुलीचक्रुरेके
निघ्नन्तो हन्त यज्ञेष्वपि च पशुगणं स्वर्गमग्रे भजामः ॥ २१ ॥

(विचिन्त्य सश्लाघम्) सर्वथा लोके अस्मदीयमेव महत्तरं शास्त्रम्। यत्र प्रत्यक्षमेकमेव प्रमाणं नानुमानादीनि। प्रत्यक्षप्रमाणगम्यं पृथिव्यादिचतुष्टयमेव तत्त्वम्। अर्थकामावेव पुरुषार्थौ। भूतान्येव चेतयन्ते। लोकान्तरं तु नास्त्येव। ऋणं कृत्वा घृतमपि पेयमेव। मरणमेव मोक्षः इति। अशेष केशलुञ्चनमेव सत्क्रियानुष्ठानम्। चैत्यवन्दनमेव नित्यानुष्ठेयं कर्म। एतत्प्रतिपादकं शास्त्रमस्मदवृद्धेन कृतम्। तेन शिष्यप्रशिष्यद्वारेण प्रचारितमस्मिन् लोके तन्त्रमिति।

(ततो बौद्धशिष्यपरिवृतः प्रविशति [चार्वाकः])

चार्वाकः—वत्स! अवेहि [1][नी]तिरेव विद्या। धूर्तजनकल्पिताः वेदान्ताः निगमागमौ च। पश्य;

क्रिया तृतीयक्षणजातनाशा द्रव्यश्च दग्धं लयमाप कर्ता।
तैः स्वर्गसौख्यं बहु भुज्यते चेच्छुष्कद्रुमस्यापि फलोदयः स्यात् ॥२२॥

अपि च,

जन्तूनां निधनं समागतवतां श्राद्धं प्रकुर्वन्ति ये
तृप्त्याधायकमित्यनेकरुचिमच्छाकाज्यदध्यादिभिः।
तेषामद्य किमुच्यतामविदितस्नेहश्शिखां वर्धये-
न्निर्वाणस्य विचिन्तये तदपि किं दीपस्य कुत्रापि वा ॥ २३ ॥

[1] न.

किञ्च,

समागताः श्राद्धकाले पितरो भोजनार्थिनः ।
कलत्रपुत्रमित्रादीन् परामर्शन्ति किं तथा ॥ २४ ॥

शिष्यः—आचार्य! यद्ययमेव परमपुरुषार्थः यद्भुज्यते पीयते च, तर्हि किमिति सर्वजनैस्तीर्थपर्यटनकृच्छ्रचान्द्रायणपरपाकपरिहरणचतुष्षष्टिशीलसम्पादनादिभिः संसारसौख्यविरोधिभिश्शरीरसंशोषणैक-[फल]सम्पादकैर्व्रतादिभिः [1]खिद्यते ?।

चार्वाकः—धूर्तमुखोदीरितागमवञ्चितानां स्वमनोरथोपरचितापूपभक्षणादिजनिततृप्ती[2]नां मूर्खाणामाशामात्रमेतत् ।

हर्षाद्रोषान्निमीलन्नयनसरसिजभ्राजमानाननानां
किञ्चित्सन्दष्टदन्त[3][च्छ]दगलितसुधास्वादनं सुन्दरीणाम् ।
हित्वा मूढाः पिबन्त्यङ्गुलिगलितरजःकीर्णमत्यन्तहेयं
नीरं क्षीरेण तुल्यं स्वमतहितसदाचारसञ्चारणानाम् ॥ २५ ॥

अपि च;

स्तनाभोगस्फीतां नवनवविलासैकचतुरां
[4][परे] त्यक्त्वा बालां मदनकदनार्हामनुपमाम् ।
शिलां काञ्चिन्मूढाः करतलग[5]तां टङ्करचितां
प्रशंसन्त्यज्ञानादहह शिवलिङ्गं महदिति ॥ २६ ॥

शिष्यः—भो भो गुरुस्वामिन्, सदा तीर्थसञ्चरणशीलास्त्वेवमालपन्ति, अतिबहुलतरदुःखतरङ्गितस्संसारसिन्धुस्सर्वथा परिहरणीय इति ।

चार्वाकः—आः, पशूनां मन्दबुद्धीनामेतत्कुमतिविलसितम् ।

मन्दाः किञ्चन बुद्धितस्सुखमिदं स्रक्चन्दनाद्युद्भवं
दुःखेनावृतमित्यपास्य सहसा गच्छन्ति तुर्याश्रमम् ।
ते माधुर्यरसोदरं बहिरभिव्याप्तं कठोरत्वचा
सन्त्य[ज्यै]क्षवखण्डदण्डममलं शा[घाट]मिच्छन्त्यहो ॥ २७ ॥

[1] च्छिद्य. [2] प्ता [3] च्छि [4] परि [5] ता

महामोहः—अयि साधो, त्वयेदानीं चिरन्तनानि वचनानि प्रमाणीकृतानि। तानि हि मम श्रोत्रपरितोषं जनयन्ति। अतस्त्वमेव अस्माकमतीव हृद्यः (विलोक्य, सानन्दम्) पारितोषिकमस्मैं वस्त्राभरणादिकं देहि। (इत्याज्ञापितवान्)

चार्वाकः—(विलोक्य) अस्मत्प्रभुणा महाराजेन सर्वोत्कर्षेण व[र्त्य]तां व[र्त्य]ताम्। चार्वाको[ऽहं] नमस्करोमि।

महामोहः—चार्वाक! अत्रोपविश्यताम्। (उपविष्टश्चार्वाकः कृतसाष्टाङ्गप्रणामं महामोहभूपतये कलिपुरुषं विज्ञापितवान्)

महामोहः—अथ कलेः कुशलमव्याहतम्?

चार्वाकः—महामोह! भवदनुग्रहात्सर्वत्र कुशलमेव। निष्पादिताशेषकार्यश्च त्वच्चरणपीठं अयं द्रष्टुमिच्छति। यत;—

धृत्वा प्रभोर्गुरुतरं शिरसा निदेश-
मासादिताक्षनिचयोपचया रणोक्ताः।
सम्मानिता नृपतिना खलु तस्य भृत्याः
कुर्वन्ति धन्यधरिताः पदयोस्सपर्याम्॥ २८॥

महामोहः—ततस्तत्र किं जातम्?

चार्वाकः—देव!

यदद्यविस्रम्भविहारलीलां
त्रयीविरुद्धां गमिता मनुष्याः।
न तत्र वा हेतुरहं कलिर्वा
त्वनुग्रहास्ते प्रभवन्त्यजस्रम्॥ २९॥

अत्र पारशीकारशमदमादिरहिताः परित्यक्ताम्नायसमया नितरामस्मत्पक्षमेवालम्बन्ते। अन्येषामपि याजनादिहेतुतया स्वजीवनमात्रफलदायिकैव त्रयी। यदाहाचार्यः;—

अग्निहोत्रं त्रयो वेदाः त्रिदण्डं भस्मकुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥ २० ॥ इति,

तेन काशीरामेश्वरादिदिव्यक्षेत्रेष्वपि न दीक्षाशिवलिङ्गयोरुदयश्शङ्कनीयः ।

महामोहः—साधु, साधु, सम्यगेवाचरितम् । महत्खल्विदमपि क्षेत्रं भवद्भिरात्मसात्कृतमेव ।

चार्वाकः—विज्ञापनीयमन्यद्वर्तते ।

महामोहः—किमेतत् ।

चार्वाकः—एतस्य शिवभक्तिर्नाम स्वभावादेवास्मत्कुलपरिभवकारिणी महानुभावा वर्तते । सा च कलिना यद्यप्यविरलतां नीता, तथापि तत्सम्पन्नान्महापुरुषान्निरीक्षितुमपि न समर्थाः । तत्र सावधानेन भवता स्थातव्यमिति ।

महामोहः—(सभयम्) अत्र सिद्धा खलु शिवभक्तिकन्या अस्माभिस्समुन्मूलयितुमशक्या । अस्तु वा । (सप्रकाशम्) साधो किमनया शङ्कया ? । कामक्रोधादिष्वस्मदनुजीविषु सत्सु कथं तस्यास्समुत्पत्तिः ? । तथाप्यति क्षुद्रेऽपि शत्रौ विजिगीषुणा सावधनोन भवितव्यम् । यतः ;—

शत्रुरल्पोऽपि भूपानां विपाके सति दुःखकृत् ।
चक्षुस्सम्पीडयत्येव सूक्ष्मोऽपि रजसः कणः ॥ ३१ ॥

कः कः पुमानत्र भोः ।

(दौवारिकः प्रविशति)

[दौवारिकः]—आज्ञाप्यताम् ।

महाराजः—आदिश्यन्तां कामादयोऽस्मत्सचिवा महानुभावाः 'शिवभक्तिकन्यका भवद्भिरप्रमत्तैर्निराकार्तव्ये'ति ।

दौवारिकः—भो भोः कामादयाः एवमाज्ञापयति देवः । (इति निष्क्रान्तः)

(ततो लिखितपत्रहस्तः कश्चित्पुमान् प्रविष्टः)

[पुरुषः]—पश्चिमाम्बुधितीरे गोकर्णाख्यं दिव्यक्षेत्रं शिवस्थानमस्ति। तस्मादहमागतोऽस्मि। तत्र मदमानाख्याभ्यां भवदधिकृतपुरुषाभ्यां महाराजनिकटं प्रेषितोऽस्मि। (निरीक्ष्य) श्रीशैलक्षेत्रमिदमेव। महाराजः चार्वाककलिभ्यां सार्धं किमपि मन्त्रयन्नास्ते। तदुपसर्पाम्येनम्। जयतु जयतु महाराजः। पत्रमिदं विलोकयतु महाराजः।

महामोहः—(पत्रं गृहीत्वा) कुतस्त्वमागच्छसि ?।

पुरुषः—महाराज ! गोकर्णात्।

महामोहः—(स्वगतम्) कार्यमत्यन्तसमीचीनं भवति। (प्रकाशम्) ननु गच्छ चार्वाक ! कर्तव्यार्थेषु अप्रमत्तो भव।

चार्वाकः—यदादिशाति महाराजः। (इति निर्गतः)

महाराजः—(पत्रं वाचयति) "स्वस्ति। श्रीमच्छ्रीशैलक्षेत्रमहाराजाधिराजराजशिरोभूषणमहामोहभट्टारकपादान्महाबलेश्वरायतनान्मद-मानौ साष्टाङ्गं नमस्कृत्य विज्ञापयतः। यथा ;--कुशलमव्याहतम्। अनन्तरं सिद्धान्ताख्यशिवागमसहचारिण्यामुपनिषद्देव्यां सञ्जाता विद्याख्या कन्या स्वदुहित्रा भक्त्या साकं गुरोर्दूत्यमापन्ना सपर्यादेवीं तत्सङ्गमाय घटयितुं प्रवृत्तेति श्रुतमस्माभिः। अपि च, कामसहचरो धर्मोऽपि निष्कामनाख्यया स्वपत्न्या बोधितस्सन् वैराग्यादीनामस्मद्विपक्षाणां दत्तहस्त इव लक्ष्यते। तदेतदर्थं ज्ञात्वा भवतां निवेदि[त]मिति"

महामोहः—(सक्रोधम्) आः कथमेवं मन्दा अत्यन्तभीरवः विद्याया अपि बिभ्यति ?। कथमस्यास्सम्भवः। तथाहि ;—

> धाता शारदनीरदाङ्गरुचिरां शुम्भद्रदां भद्रदां
> वाणीमिन्दुकलाधरोऽपि गिरिजां वा श्यामलां श्यामलाम्।
> विष्णुस्सिन्धुसुतां सरोजरुचिरावासक्षमां सक्षमां
> कान्तामेत्य परं प्रमोदति पिकव्याहारिणीं हारिणीम् ॥ ३२॥

ब्रह्मादिष्वेवं वसत्सु अन्यजन्तुषु विदया कथमुदीयेत। (वार्ताहरं प्रति) जाल्म, कामं सत्वरमेत्य आज्ञामस्माकं प्रतिपादय। यथा 'दुरात्मा धर्म' इत्यस्माभिरवगतम्। स तु क्षणमात्रमपि न विश्वसितव्यः। तं द्रुपदमेव निबध्य त्वया धर्तव्य इति।

पुरुषः—यदाज्ञापयति मे प्रभुः। (इति निष्क्रान्तः)

महामोहः—(स्वगतम् -विचिन्त्य) विदयाप्रतीकारे क उपायः ? अथवा उपायान्तरेणालम्। विदया तावत्सर्वथा नोदयमासादयत्येव।

> वाग्देवीमनिशं मुखान्तरगतामम्भोजजन्माकरो–
> द्गौरीबाहुलतोपकल्पितपरीरम्भोत्सुकश्शङ्करः।
> विष्णुस्सन्ततमिन्दिराकुचतटीसम्पीडितोरस्थलो
> दुग्धाब्धौ स्वपितीतरेषु च कुतो विदयाजनिर्जन्तुषु ॥ ३३ ॥

कामस्तावदेतत्कार्यसाधने अत्यन्तसमर्थस्तिष्ठतु। क्रोधलोभावेव पर्याप्तौ। (प्रकाशम्) कः कोऽत्र भोः

द्वास्स्थः—(प्रविश्य) अज्ञापयतु देवः।

राजा—तावाहूयेतां क्रोधो लोभश्च।

द्वास्स्थः—यदादिशति देवः। (इति निर्गतः)

(ततस्समायाति क्रोधो लोभश्च)

क्रोधः—श्रुतं मया पूर्वमेव।[1] विद्या शिवभक्तिश्च अस्मदज्ञानभूपतेः प्रातिभटयमाचरतः इति। अहो ! मयि जीवति कथमनयोरात्मनिरपेक्षचेष्टितम।

> क्षणादन्धीकुर्यामधिकजनमत्यन्तबधिरं
> करोम्यत्यासकत्या श्रुतमपि करोम्यश्रुतमहम।
> अधीतं यत्सर्वं भुवि तदनधीतत्वमपि ॥
> नयामि द्राक्कुर्वे कृतमपि तथैवाकृतमिव ॥ ३४ ॥

---

1 अत्र च "कःकोऽत्र भोः। द्वास्स्थः (प्रविश्य) आज्ञापयतु देवः। राजाः विद्या" इति वर्तते। लेखकप्रमादस्त्वयमिति त्यक्तम्।

लोभः—मदुपचरितां मनोरथसरित्परम्परामेव नोत्तरन्ति। किं पुनर्विद्या-
दींश्चिन्तयन्ति। पश्य सखे;—

मत्तेभा मदगन्धगन्धिलकटभ्रान्ताशयास्सन्त्यमी
वातातीतरया हयाश्च तुरगांश्चान्यान्यतिष्ये पुनः।
[आगच्छेदिद]मेतदागतमिति प्राप्ताधिकाकाङ्क्षिणां
सङ्कल्पोपहतात्मनां जडनृणां का नाम विद्याकथा ? ॥ ३५ ॥

क्रोधः—सखे. साधुविज्ञापितस्त्वया मदुनभवः।

दक्षं दीक्षितमध्वरेऽच्छिनदुमानाथो भृगोर्वल्लभां
वैकुण्ठोऽपि पुलस्त्यपुत्रमहरच्छ्रीरामभद्रः प्रभुः।
शान्तानामपि यज्वनामपि तपश्शुष्यत्तनूनामपि
ब्रह्मज्ञानरतात्मनामपि कुलान्युन्मूलयिष्ये क्षणात् ॥ ३६ ॥

लोभः—तृष्णे ! इत आगच्छ।

(प्रविश्य)

तृष्णा—किमादिशत्यार्यपुत्रः ?।

लोभः—कान्ते श्रूयताम्,

एकद्वित्रिशतायुतादिगणनायोग्यार्थचिन्तागुणा-
वद्धस्वात्मजुषामहर्निशमपि प्राप्ताधिकं ध्यायताम्।
कल्पान्तक्षुभितार्णवोर्मिसुभगान्यङ्गानि पुष्णासि चे-
त्तृष्णे ! त्वं वद सर्वलोकविमते का नाम विद्याकथा ॥ ३७ ॥

तृष्णा—साधो, अत्र प्ररोचितैवाहं स्वयमपि नित्यमभियुक्ता। साम्प्रतं
भवदाज्ञया ब्रह्माण्डकोटिभिरपि न मे हृदयं पूरयिष्यते।

क्रोधः—हिंसे, इतस्तावत्।

हिंसा—आगताहम्। आर्यपुत्रः आज्ञापयतु।

**क्रोधः**—प्रिये ! धर्मपत्न्या भवत्या सह मातृपुत्रवधादिस्सुकर एव ।

तथा हि -

केयं मातृपिशाचिका च भगिनी का का स्नुषा कः पिता
केऽमी बन्धुजना विशाटसुभटैस्तुल्याश्च केऽमी सुताः ।
यावत्सर्वमिदं विहन्मि कुलमाबालातिवृद्धं मह–
त्तावत्स्फूजथुभीषणातिपरुषाश्शब्दा न शाम्यन्ति मे ॥ २८ ॥

एष प्रभुः । तमुपसर्पामो वयं सर्वे । (उपसृत्य) जयतु जयतु महाराजः ।

**राजा**—उपनिषद्देव्यास्तनया विद्या अस्मद्द्वेषिणी । सा भवद्भिर्निग्राह्या ।

**सर्वे**—यदाज्ञापयति महाराजः (इति निष्क्रान्ताः)

**राजा**—(आत्मगतं) महाविद्या नाम भक्तिजननी । तत्केनाप्युपायेन भक्तिर्ह–न्तव्या । ततो दुहितृवियोगदुःखाद्विद्याऽपि नष्टप्राया भवति । भक्ति–निग्रहे तावदश्रद्धैव प्रगल्भा । तत्र सैव नियुज्यताम् । (स्वगतमेव रहसि विचिन्त्य विनिर्णीय) विद्यानिग्रहेऽपि तेऽप्यसमर्था एव । तथाप्यत्यन्त–निगूढोपायोऽस्ति । तथाहि (इतस्ततो विलोक्य) मिथ्यादृष्टे ! सत्वरमा–हूयतामश्रद्धाख्या विलासिनी ।

**मिथ्यादृष्टिः**—यदाज्ञापयति देवः । (इति निष्क्रम्य अश्रद्धया सह प्रविशति)

**अश्रद्धा**—सखि, चिरकालप्रेक्षितस्य महाराजस्याननं कथमवलोकयामि । सोऽयं खलु महाराजः मामद्योपालप्स्यते ।

**मिथ्यादृष्टिः**—सखि, तत्र दर्शनेन महाराजः न वेत्स्यत्यात्मानमेव । ततः कथमुपालप्स्यते ।

**अश्रद्धा**—किमिति मामविश्वास्यसौभा[ग्या]मालोक्य विडम्बयसि ।

**मिथ्यादृष्टिः**—सखि, अद्यैव प्रेक्षिष्ये अविश्वास्यत्वं सौभाग्यस्य । अन्यच्च प्रियसखि ! घूर्णाकुलमिव ते लोचनमालोकयामि । सखि, तत्र किं कारणम् ? ।

अश्रद्धा—सखि, एकभर्तृकापि या नारी भवति, तस्या अपि निद्रा दुर्लभा। सकललोकवल्लभानां किं पुनरस्माकम्।

मिथ्यादृष्टिः—के पुनस्सख्यास्ते वल्लभाः।

अश्रद्धा—अज्ञानमहाराजादुपरि महामोहः। तदुपरि कामक्रोधौ लोभोऽहङ्कारश्च। अथवा अलमनया विशेषपरिगणनया। अज्ञानकुले ये जातास्ते बालास्स्थविरा युवानोऽ[पि] मां विना कुत्रचिदपि न रमन्ते।

मिथ्यादृष्टिः—ननु कामस्य रतिः, क्रोधस्य हिंसा, लोभस्य तृष्णेति प्रियतमाः श्रूयन्ते। तासां [1]प्रियतमान न कथं रमयन्ती ईर्ष्यां जनयसि?

अश्रद्धा—सखि, ईर्ष्येति किं भाष्यते। ता अपि न मया विना क्षणमपि तिष्ठन्ति।

मिथ्यादृष्टिः—अत एव फणामि। त्वत्समाना सुन्दरी भुवनत्रयेऽपि नास्ति। यस्यास्सौन्दर्यलेप[2][भा]नीकृतहृदयास्सपत्न्यः अनुग्रहं प्रतीच्छन्ति। सखि! अपरमपि फणामि। एवं निद्राकषायितनयना [3]चञ्चचरणनूपुरझङ्क शब्दायमानमन्दगमनेन महाराजं सम्भावयन्ती विशङ्कितान्तरङ्गे क ष्यन्ती प्रियसखी तर्कयामि।

अश्रद्धा—किमत्र शङ्कनीयम्। एष खलु महाराजनियुक्तानामेव अए विनयः। अपि च दर्शनमात्रप्रसन्नहृदयानां पुरुषाणां कीदृशं भयम्।

महाराजः—(विलोक्य) अये, सम्प्राप्ता खल्वश्रद्धा प्रियतमा।

कनत्कनककिङ्किणीक्वणितमेखलालङ्कृता
करोच्चलनचञ्चलद्वसनलक्ष्यवक्षोरुहा।
स्खल[4]न्मृदुपदालसा लपनमञ्जुला वीटिका-
रसस्थगितनूतनक्षतविराजमानाधरा॥ ३९॥

मिथ्यादृष्टिः—अयि प्रियसखि, महाराजोऽयमुपसर्पतु।

---

[1] प्रियतमा न कथं रमन्ती    [2] मा    [3] चच्चरण    [4] न्मदुपला

अश्रद्धा--(उपसृत्य) जयतु जयतु महाराजः ।

महाराजः—प्रिये,

> अङ्कं[न्यङ्कु]मदातिपङ्किलकपोलोरोजकुम्भान्विता
> सम्प्राप्योपविशाधुना मम परं मन्दस्मितालङ्कृता ।
> नूनं चन्द्रकलाधराङ्कविलसत्पर्यङ्कभावोल्लस-
> त्प्रालेयाद्रिसुताननाम्बुजरमां सम्प्राप्स्यसे त्वं पराम् ॥ ४० ॥

अश्रद्धा—सस्मितं तथैव करोति)

[महाराजः]—(आलिङ्गनसुखमभिनीय) अहो प्रेयसीगाढोपगूहना[त्]पुनरायातं नवयौवनम् । तथाहि—

> यः पूर्वं समुपेत्य नूतन[व]यः प्रारम्भहेतोर्जनिं
> चित्तोन्मादकरो गतात्मविषयो बद्धानुरागो[ऽभवत्] ।
> कान्दर्पः कमलानने तव परीरम्भाद्विकारः पुनः
> संवृद्धः स्थिरयत्यसावभिनवो वृत्तीरिवान्तर्मम ॥ ४१ ॥

अश्रद्धा—महाराज ! अहमपीदानीं नवयौवना संवृत्ता । न खलु भावानुबद्ध प्रेम कालेन वियोज्यते । आदिशतु महाराजः किं निमिन्तं महामोह-भट्टारकेण स्मृताऽस्मि ।

महामोहः—प्रिये,

> संस्मर्यते[तु] या सुभ्रूर्वर्तते मानसाद्बहिः ।
> शुकीव भ्राजसे कान्ते सदा मच्चित्तपञ्जरे ॥ ४२ ॥

अश्रद्धा—महानुग्रहोऽयं महानुग्रहोऽयम् ।

महाराजः—अन्यच्च दासीसुता भक्तिर्गुरुणा सपर्यां योजयितुं कुट्टनीभावमापन्ना । अतः ;—

> अत्यन्तदुष्टकुलजां प्रतिकूलभावां
> पापानुगामिहृदयामतिहेयशीलाम् ।

आकृष्य के[श]निचयं प्रसभं प्रतार्य
रङ्गामिमां खलजनेषु निवेशयादय ॥ ४३ ॥

अश्रद्धा—एतावन्मात्रकर्तव्यार्थे भर्तुरलमाग्रहेण । वचनमात्रेणैव भर्तुर्दास्येवाज्ञामशेषां करिष्यति । अस्मत्सहचारिण्या मिथ्यादृष्टया धर्मो मिथ्या, मोक्षो मिथ्या, सौख्यविघ्नकराणि धूर्तप्रवर्तितानि शास्त्राणि मिथ्येति बोधिता भक्तिः, झटिति गुरुस्वरूपमेव परिहरिष्यति । किं पुनस्सपर्याम् ।

अपि च ;—

विमुक्तशब्दादिसुखप्रचारे
मोक्षे मया साधु निरूपयन्त्या ।
दोषान्प्रसह्याद्य वियुज्यते सा
विद्यासकाशाच्छिवभक्तिरेषा ॥ ४४ ॥

महामोहः—ए[वं] चेन्मम, हितं साधु निष्पादितप्रायम् । (झटिति इमां पुनर्गाढमालिङ्गय चुम्बति)

अश्रद्धा—स्वामिन्, सप्रकाशमेवं कृते अहमतीव [लज्जे]।

महामोहः—तथैव भवतु । निवासगृहमेव प्रविशामः ।

(इति निष्क्रान्तास्सर्वे)

इति श्री [मल्लनाराध्यविरचिते] शिवलिङ्गसूर्योदये

द्वितीयोऽङ्कः समाप्तः

## अथ तृतीयोऽङ्कः

(ततः परं पाषण्डविडम्बनं भविष्यति)

(ततः प्रविशति विद्या शान्तिश्च)

विद्या[1]—(सास्रम्) अयि तनये! तनये! कुत्रासि, कुत्रासि? मल्लोचनपथमायाहि।

भस्मोद्धूलितधूसराङ्गरुचिरा रुद्राक्षमालोज्वला
ये वा शैवषडक्षरीजपपरा लिङ्गार्चनातत्पराः।
हित्वा तान् पुरुषान् [2]वपेव सवने मार्जालवक्त्रान्तरं
हा भक्ते [3]तनये त्वमद्य विधिना पाषण्डहस्तं गता ॥ १ ॥

अथवा अलं जीवनसम्भावनया;

स्थातुं न सहते क्वापि त्यक्त्वा मां पुत्रिका मम।
ततश्शक्नोति न प्राणान् धर्तुं कुमतदूषिता ॥ २ ॥

तद्भक्त्या दुहित्रा विना क्षणमपि विद्याया अपि जीवनं विडम्बनमेव। तत्सखि शान्ते! चितिमारचय। यावच्छीघ्रमेव ज्वलनप्रवेशेन तस्यास्साहचर्यमाचरामि।

शान्तिः—(सखेदम्) अतिपरुषभीषणभाषणान्याभाषमाणा त्वं मामपि मृतप्रायां करोषि। तावत्प्रसीद। क्षणमात्रं जीवितम्। श्रीशैलादिपुण्यक्षेत्रेषु शैवजनसमाकीर्णेषु च प्रदेशान्तरेषु निपुणमन्वेषयामि। अथवा अज्ञानभूपतेर्मन्त्रिणो महामोहात् भीता कुत्रचिदत्रैव रहःप्रदेशे निगूढा न दृश्यते?।

विद्या—किं मृग्यते?।

प्रत्येकं च समिच्छषालदृषदाकीर्णोदरा यज्वना-
मावासास्सखि धर्ममार्गनिरता भूपास्तथा योगिनः।
काषायाम्बरदण्डमृद्घटयुतास्संन्यासिनोऽन्वेषिताः
भ[क्तेः] क्वापि मयाद्य हन्त दुहितुर्नामापि न श्रूयते ॥ ३ ॥

---

[1] विद्यानाम। [2] रसेति पाठान्तरम्। [3] स्तनये।

शान्तिः—महती खलु भक्तिः। अतस्तस्या ईदृशीं दुर्गतिं नोत्प्रेक्षय। न खलु तादृशः पुण्यशीलाः तादृशीमसम्भवनीयामापदमनुभवन्ति।

विद्या—किमिति विधौ प्रतिकूले न सम्भाव्यते। तथा हि;

श्रीरामचन्द्रमहिषीमसुरस्तपस्वी
मायां विधाय हृतवान् विजने वनान्ते।
चित्रं न तन्मम सुतां जनतासमक्ष-
मेवाजहार सखि पश्य विचित्रमेतत् ॥ ४ ॥

शान्तिः—तत्त्वतः पाषण्डगृहानेव तावदन्वेषयामि।

[विद्या]—सखि, तथैव भवतु। (इति परिक्रामतः)

शान्तिः—(सत्रासम्) सखि स हि राक्षसः।

विद्या—क्वायं राक्षसः।

शान्तिः—सखि, विलोकय। लुटन्मलकर्दमभीषणदुर्निरीक्ष्यगात्रद्युतिः, विमुक्तचिकुरपरिभ्रष्टातिकच्चरपट्टच्चरः. मयूरपिञ्छचञ्चत्पक्षशाखः, कोऽप्ययमित एवाभिवर्तते।

विद्या—नासौ सखि, राक्षसः। निष्पौरुषः खल्वयम्।

शान्तिः—तर्हि कोऽयं भविष्यति?।

विद्या—पिशाच इति मन्ये।

शान्तिः—एवं प्रचण्डमार्ताण्डमण्डलसमापतत्पिचण्डिलप्रभाविभासमानभुवनान्तराले कथं दिनमुखे पिशाचिकानामवकाशः।

विद्या—तर्हि अनन्तरमेव महाकारविवरादुत्तीर्णः कश्चिन्महानारकीपुरुषो भविष्यति। (निरीक्ष्य-विचार्य) आः विदितमज्ञानभूपतिप्रेरितोऽयं दिगम्बरसिद्धान्त इति। सर्वथाऽस्य दर्शनं दूरादपि परिहरणीयम्। (इति मुखं पराकृत्य तिष्ठति) सखि, क्षणं वर्तस्व।

(ततः प्रविशति यथानिर्दिष्टो दिगम्बरसिद्धान्तः)

दिगम्बरः—नमः पूज्येभ्यः। सर्वशरीरान्तर्गत आत्मा स्फुरत्तरणिसङ्काशः शतगुणितैहिकामुष्मिकफलप्रदः। (परिक्रामति) (आकाशे कर्णं दत्वा) अरे श्रावक, श्रूयताम्; मलकोशे शरीरेऽस्मिन् गङ्गाजलाप्लुतेऽपि कीदृशी शुद्धिः?। अतिस्वच्छस्फटिकावभासमान आत्मा वृद्धपरिचरणेन ज्ञातव्यः। किं ब्रवीषि?। कीदृशी वृद्धपरिचर्या?। श्रृणु त्वम्। दूरात्प्रत्युत्थाय वन्दनं, भक्ष्यभोज्याद्युपहितं भोजनं, कृतदारोपभोगेषु तेष्वनसूया।
(नेपथ्याभिमुखमवलोक्य) अयि भक्ते, इतस्तावत्।

(उभे अप्यालोकयतः) (ततः प्रविशति तदनुकूला भक्तिः)

[भक्तिः]—किमाज्ञापयतु। (विद्या भुवि मूर्छिता पतति)

दिगम्बरः—श्रामकाणां कुलं क्षणमपि न परित्यज।

क्तिः—तथैव भवतु। (इति निष्क्रान्ता)

शान्तिः—समाश्वसितु प्रियसखी। सखि, नाममात्रेण न भेतव्यम्। यच्छ्रुतं मया अहिंसासकाशात् आस्तिका नास्तिकेति। अस्ति पाषण्डानामपि तमस्सुता भक्तिः। एषापि तामसी भक्तिर्भविष्यति।

विद्या—(समाश्वास्य) एवमेतत्। तथा हि;—

सतां मे सच्छैवव्रतनियमसम्पन्नजनता-
प्रियावासां पुण्यां शमदमयुतां सुन्दरतराम्।
गुणेनाप्येकेन प्रभवति च नेयं तुलयितुं
दुराचारा हंसीमिव बकवधूर्जिह्मगमना ॥ ५ ॥

मास्त्वयं, सौगतेष्वन्विष्यताम्। (परिक्रामतः)

(ततः पुस्तकहस्तो बुद्धागमः प्रविशति)

भिक्षुकः—(विचिन्त्य)

अमी भावा जाता बहिरवगता यत्र परमाः
क्षणेन क्षीयन्ते करकततयो वारिणि यथा।
परा नैवेदानीं गलितविलसद्वासनतया
धियामेकाकारा विषयविमुखा राजति मतिः ॥ ६ ॥

(परिक्रम्य सश्लाघम्) अहो समीचीनोऽयं सौगत एव धर्मः। तत्र सौख्यं च मोक्षश्च। तथा हि;

गुञ्जद्भृङ्गे निकुञ्जे[ऽति] मृदुकिसलयास्तीर्णतल्पे निषण्णां
वामाक्षीं निक्षिपन्तीं [स्व]करयुगलमित्याक्षिपन्तीं शठेति।
यो वा निष्पीड्य चुम्बत्यलकचितमुखं गाढमालिङ्ग्य दोर्भ्यां
प्राप्तं तेनैव सौख्यं निरुपममनिशं वाङ्मनःकृत्ययोग्यम् ॥ ७ ॥

शान्तिः—कोऽयमभिनवनारिकेलावनिरुहातितुन्दिलो विलम्बमानकषाय पिङ्गलचिकुरचूडामण्डितमुण्डी इत एवागच्छति।

विद्या—सखि, बौद्धागम एषः।

मुण्डी—आः (आकाशे कर्णं दत्वा) भो भो उपासकाः भिक्षवश्च शृ आचार्यपादस्य वाक्यम्। (इति पुस्तकं वाचयति) विलोकयाम्यहं भुवनानां सुगतिं दुर्गतिं च। क्षणिकास्सर्वे भावाः। नास्त्यात्मा स्थायी। अतो भिक्षुषु कलत्रसम्भोगनिरतेषु गृहमेधिभिरीर्ष्या न कर्तव्या। ईर्ष्या नाम अन्तःकरणकालुष्यं हि। (नेपथ्याभिमुखमवलोक्य) भक्ते इतस्तावत्।

भक्तिः—आज्ञापयतु राजन्यः।

भिक्षुः—उपासकांश्च भिक्षूंश्च दृढं परिष्वज्य स्थीयताम्।

भक्तिः—यदाज्ञापति राजन्यः (इति निष्क्रान्ता)

विद्या—सखि, इयमपि तामसी भक्तिः।

शान्तिः—एवमेतत्।

क्षपणकः—(भिक्षुकमवलोक्य उच्चैरशब्दमकरोत् ) अरे भिक्षुक इतस्तावत। किमपि पृच्छामि।

भिक्षुः—(सक्रोधम् ) आः पाप, पिशाच, किमेवं प्रलपसि ?।

क्षपणकः—अरे, मुञ्च कोपम्। शास्त्रकथां पृच्छामि।

भिक्षुः—अरे क्षपणक। कथामपि न जानासि ?। भवतु, (उपसृत्य) किं पृच्छसि ?।

क्षपणकः—फण। क्षणसञ्जातविनाशेन भवता किमर्थमिदं व्रतमनुष्ठीयते।

भिक्षुः—अरे, श्रूयताम्। अस्मत्सन्ततिनिपतितः कश्चिद्विज्ञानक्षणः क्वचित्स-मुत्पन्नवासनो मोक्ष्यते।

क्षपणकः—अरे धूर्त ! अनादिकालमारभ्य प्रवर्तमानप्रपञ्चे को वा मुक्तो भविष्यति। ततस्तेन नष्टस्य साम्प्रतं कीदृगुपकारो भविष्यति। अन्यच्च पृच्छामि केनोपदिष्टस्तवायं धर्मः।

भिक्षुः—ननु सर्वज्ञेन भगवता बुद्धेन।

क्षपणकः—कोऽयं बुद्ध ; ?।

भिक्षुः—अस्मत्कुलस्वामी सर्वज्ञो बुद्धः।

क्षपणकः—अरे अप्रबुद्धिक ! यदि तस्य वचसा तस्मिन सर्वज्ञत्वमवगच्छसि तदाहमपि सर्वं जानामि त्वमपि पितृपितामहैस्साकं मद्दास इति।

भिक्षुः—(सक्रोधम् ) आःपापिन् ! किं तवाहं दासः ?।

क्षपणकः—अरे, अनवरतदासीसम्भोगनिरत ! दुष्ट ! परिव्राजक ! दृष्टान्तो मया दर्शितः। अपि च सशपथं फणामि। बौद्धशास्त्रं परिहृत्य अर्हदनु-शासनमनुभवन् दिगम्बरव्रतमेवाचरतु भवान्।

भिक्षुः—आः पाप, स्वयं भ्रष्टः परानपि भ्रंशयितुमिच्छसि ?।

शाल्यन्नं मृदुलं हित्वा भवानिव महामतिः।
[1]समुत्सहेत को[1] भोक्तुं श्वमांसं कृमिसङ्कुलम् ॥ ८ ॥

अपि च, भवच्छास्त्रप्रवक्तुरर्हतोऽपि को वा विश्वसेत् ?।

क्षपणकः—ग्रहातिचार, वक्र, चन्द्रसूर्योपरागसमागतप्रामाण्यदर्शनेन निश्चितमस्मत्पूज्यस्यार्हतस्सर्वज्ञत्वम्।

भिक्षुः--(विहस्य) अनादिकालमारभ्य प्रवृत्तेन ज्योतिश्शास्त्रेण अतीन्द्रियज्ञानशून्येन भवता अतिनश्वरमिदं व्रतमाश्रितम्। तथाहि;—

रे रे सङ्गतिमन्तरेण सकलान जानाति लोकान् कथं
जीवस्सर्वशरीरगः परिमितो नित्यो यथार्थं वद।
सस्नेहस्सशिखश्शरावपिहितो दीपः पदार्थान बहून्
प्रत्यक्षान कुरुते निकेतनगतान् कुत्रापि कस्यापि वा ॥ ९ ॥

तस्मादशेषविरुद्धार्थप्रतिपादकाच्छास्त्रान्तरात्सौगतशास्त्रमेव महत्तरमत्यन्तसुखास्पदमित्यवलोकयामः।

विद्या—सखि! अन्यतो गम्यताम्।

शान्तिः—एवं भवतु। (इति निष्क्रान्ते)

विद्या—(पुरोऽवलोक्य) एष पुरस्ताद्भैरवसिद्धान्तः। भवतु, अत्रापि तामन्वेषयामः

(ततः प्रविशति कापालिकवेषधारी भैरवसिद्धान्तः)

[कापालिकः]—(परिक्रम्य)

कपालमालाकलिताखिलाङ्गः
श्मशानधूलीपरिदिग्धवेषः।
पश्यामि सिद्धान् जनिसिद्धयोगो
जगच्छिवाद्भिन्नमभिन्नमेतत् ॥ १० ॥

---

[1] को वासमुत्सहेत् इति अपाणिनीयम्।

[क्षपणकः]—कापालिकवेषधारी पुरस्तादायाति। तदेनं पृच्छामि। (उपसृत्य) कापालिक! नृकपालभोजन! त्वदङ्गीकृतौ स्वर्गापवर्गौ कीदृशौ?।

[कापालिकः]—अरे क्षपणक! तावदस्माकं धर्ममवधारय।

मज्जापूरितमस्तकास्थिविलसन्मांसैकहव्यार्पणैः
सन्तप्ताग्निमतां कपालमदिरापानेन नः पारणा।
सद्यःखण्डितकण्ठनालविगलद्रक्ताम्बुधारोल्बणैः
नित्यानीतजलोपहारबलिभिः पूज्यो महाभैरवः॥ ११॥

भिक्षुः—(कर्णौ पिधाय) अहो अतिदारुणं भवतां धर्माचरणम्।

क्षपणकः—अहो केनापि पापीयसा तरसैषः प्रतारितः।

कापालिकः—(सक्रोधम्) अहो, आः निकृष्टपाषण्डखण्डितशिखण्ड! चण्डाल पिचण्डिलवेष! काशकनत्कटितटनिकटविलम्बमानचेल! अनेकजगज्जननजीवनविलयननियामकः यमकन्दर्पदर्पापशामकः अशेषवेदान्त वेद्यनिजप्रभावो भगवानुमाधवो माधवसखः।

विद्या—सत्यम्। अस्य दर्शनात्किमायातम्?।

कापालिकः—तर्हि निरूपयामोऽस्य सिद्धान्तमहिमानम्।

ज्वलज्ज्वालामालाजटिलमनलं पाणिकमले
वहाम्यब्धीन् झञ्झातुलितसलिलानद्य करवै।
तथा ब्रह्मोपेन्द्रत्रिदशपतिमुख्यानपि सुरान्
क्षणात्कुर्वे सर्वानखिलजनदृश्यस्ववपुषः॥ १२॥

क्षपणकः—अरे कापालिक! अत एव भवान् दुराचारो दुष्टात्मेति फणामि।

कापालिकः—अहो अस्य दौरात्म्यम्। (तत्खड्गमुद्यस्याहमस्य शिरो निपातयिष्यामीति मनसि निश्चित्य वल्मीकविवरात्कथाप्रसङ्गे दुर्वारभीषणापारविषानलज्वालाजाज्वल्यमानभुजङ्गमिव कोशविवरादतिनिशितमसिं उद्घाटयामास।)

[कविवाक्यम् ]—

निरीक्षे तं क्रूरं निखिलजनतात्यन्तभयदं
दुराचारं रोषारुणनयननिर्यच्छिखिशिखम् ।
भयाविष्टस्सोऽयं क्षपणकवरः कम्पितमना
रुरोदोच्चैस्सम्यग्भवति वृतसारङ्ग इव सः ॥ १३ ॥

अपि च,

विद्याऽपि तं खलजनं कुपितं निरीक्ष्य
हालातिपानविवशं धृतजीर्णकन्थम् ।
सासिं वराटवलयोरसमुन्नतांसं
भीता जगाम सहसा चकितेव दूरम् ॥ १४ ॥

(भीतां दूरं गतां विद्यामवलोक्य दिगम्बराख्यक्षपणक-भिक्षु-कापालिका निष्क्रान्ताः)

इति श्री [मल्लनाराध्यविरचित] शिवलिङ्गसूर्योदयनाटके

तृतीयोऽङ्कः

## अथ चतुर्थोऽङ्कः

(ततः परं माध्वादिमतविडम्बनं भविष्यति)

विद्या—(पुरोऽवलोक्य-सस्वेदम्) अयि सखि शान्ते, मद्दुहितुरन्वेषणायाङ्गवङ्ग-कलिङ्गसौराष्ट्रमगधादिदेशा अन्वेषिताः। यत्र कुत्रापि मत्सुतायाः भक्तेः नाम इतः न श्रूयते। सर्वथा अहं विषाग्निजलभृगुपातादिभिर्म रिष्यामि।

शान्तिः—कार्ये महति सम्प्राप्ते सङ्कटाधायकेऽपि च।
न त्वराचरणीयेति प्राहुर्नीतिविशारदाः॥ १॥

[कविवाक्यम्]—(अपिच, विद्याव्यसनदर्शनक्षुभितहृदया शान्तिः विद्यामुज्जीवितुकामा तत्तदुपाख्यानोपन्यासेन एनां विनोदयिष्यामीति मनसि निश्चित्येत्थमकथयत्।)

[शान्तिः]—अयि विद्य, पुराकिल रघुकुलपुरोहितो वसिष्ठो नाम मुनिवरः स्वभार्यायामरुन्धत्यां सुतशतकमजीजनत्। कदाचित् त्रिशङ्कुयागार्त्विज्यानङ्गीकारातिकुपितकौशिककोपसमुद्भूतया कयाचिन्महाशक्त्या भक्षितपुत्रशतकोऽपि धैर्यावलम्बनेनैव कालं निनाय। तथा हि:—

मुनीनामीशानो यमनियमसंरुद्धमनसां
वसिष्ठो गाधेयाहृतशतसुतश्शोकमगमत्।
ततश्शक्तेः पुत्राच्छुकगुरुगुरोरूर्जिततरं
पदं लेभेऽत्यन्तं शशभृदुदयात्सागर इव॥ २॥

विद्या—अयि शान्ते, त्वया किमपि श्रुतं मह्यं न कथयसि?। यद्वसिष्ठवृत्तान्तशिलाशकलताडितहृदयाऽहमत्यन्तवेपमानहृदया क्षणमपि प्राणान्धर्तुं न शक्नोमि।

त्वमश्लीलस्योक्तावतिचतुरवाचैकरचना
सखी मामद्य त्वं कुटिलहृदया वञ्चसि परम्।
अतस्सत्यं शान्ते जहिहि [ख]लभावं मयि परं
यथा पुत्री जाता मम वद तथा सर्वमनघे॥ ३॥

शान्तिः—अहो सत्यमेतत्प्रमादो धीमतामपीति जनवादः नान्यथाभावं भजते। (अतः शपथमन्तरा सेयं न विश्वसतीति मनसि निश्चित्य) विद्ये, नाहं किञ्चिदपि त्वत्सुतावृत्तान्तं जानामि। तस्मात् त्वमेव ब्रूहि।

विद्या—अस्माकं का गतिः?। किं कर्तव्यम्।

शान्तिः—नानादेशान्वेषणे यत्रकुत्रचिद्वा त्वत्सुतावृत्तान्तमधिगच्छावः।

विद्या—तर्हि सत्वरं गम्यताम्। (किञ्चिद्दूरं गत्वा पुरोऽवलोक्य) शान्ते, त्वं कतिचित्पदानि अस्मदग्रे सत्वरं गच्छेर्यदि अहं दुखितास्मि। अतः मया सह गच्छ। त्वां विना द्वित्रपदान्यपि गन्तुं न शक्ता।

शान्तिः—तर्हि तथैव भवतु। त्वया सहाहमपि तत्समीपमेवागच्छामि। (इति उभे अप्यागत्य शान्तिस्तमुवाच) भो भो क्षपणक, कस्त्वम्? त्वत्सिद्धान्तश्च कः?।

क्षपणकः—अस्मत्सिद्धान्तस्तु जीवेश्वरौ परस्परं भिन्नौ। सालोक्यमेव मुक्तिः।अत्यन्ताणवो जीवाः।

ईशानोऽहमिति प्रमाणमनघं प्रत्यक्षमेवास्ति नः<br>
सार्वज्ञादिविरुद्धधर्मसमभिव्याप्तिश्च हेतुः परः।<br>
वर्तन्तेऽखिलसर्वशास्त्रनिपुणैः प्रत्यक्षसिद्धान्तगैः<br>
अस्मद्भाष्यपरम्परादिगुरुभिस्सम्बोधितं मन्मतम्॥ ४॥

विद्या—भो भोः क्षपणक, भवद्भाष्यकृद्भ्रापिताशेषाधिकरणसिद्धान्तान् मह्यमानुपूर्व्येण कथय।

[क्षपणकः]—ततः, स्वसिद्धान्तसारासारभागान् मनसानुमिता विद्याः 'सुपर्णे' त्यादिश्रुतिसमन्वयविरुद्धान्यपि नारायणपरत्वाभिधानादयस्तावत्तिष्ठन्तु। मुक्तिस्वरुपमेवाहं विविच्य कथयामि। भगवतो नारायणस्य यदा सिसृक्षा सञ्जाता तदा मुखादिपादान्तब्रह्मावयवेभ्यः पिपीलिकादिब्रह्मपर्यन्तं देहाभ्यन्तरे परमात्मा जीवपुण्यदर्शितादिगमनं निर्गतानां तत्तत्कर्मानुरोधेन वर्णान्तरजन्मान्तरदेशान्तरप्राप्तौ तत्तद्भेदान्त भगवत्परिचर्यावेदान्तविज्ञानपञ्चायुधकैङ्कर्यादिभिः तत्त्वविज्ञाने सञ्जाते

सृष्ट्यादिभूतजीवानां गुरुकरुणादिना लब्धानां तत्सिद्धिर्भवति। सैव मुक्तिरिति व्यवह्रियते। किञ्च, मतान्तरप्रसिद्धसंसारतापानुतप्यमानशिष्यानुग्रहदेशिकान्तरेभ्यः मन्मतदेशिके विशेषोऽस्ति। तथा हि;—

लोके सन्ति मतान्त[राणि च] यदा वेदान्तविज्ञानिन-
स्संवादे जयशालिनः कुमति[नश्वा]दय स्ववृत्त्युत्सुकाः।
अस्माकं गुरुसत्तमो मठपतिर्यानाधिरुढस्स्वयं
वित्तौघार्जनतत्परो यतिवरो दण्डत्रयेणोज्ज्वलः॥ ५॥

किञ्च, मतान्तरप्रवृत्तस्वर्णस्तेयादिपातककृतनिश्चयः, धर्मशास्त्रोक्तचान्द्रायणराकादिप्रायश्चित्तक्रियाकलापो योऽसौ महान् वर्तते सोऽपि नास्ति। तथा हि;—

स्मर्तारो निगदन्ति पापकरणे पापानुगुण्याद्बहु-
प्रायश्चित्तमथो विशुद्धमनुजः पापोपपापौव[ह]त।
तत्सिद्धान्तविदः प्रपाठकगुरो [र्ह] त्वा सुवर्णादिकं
सालग्रामशिलाभिषेकसलिलस्नानेन संशुध्यति॥ ६॥

(एवं नानाविधयुक्तिपद्धवदुसमुदीरितारुद्धवचोनिकरस्फूर्जद्विदारितकर्णपुटाविद्या मूर्च्छिता अपतत्। ततः क्षपणको निष्क्रान्तः)

(कविवचनम्)

शान्त्या समाश्लिष्टकरा कृशाङ्गी
शुष्यन्मुखी वृद्धतराङ्गनेव।
पपात विद्या भुवि मूर्च्छितेव
एकाकिनी किन्नु करोमि कार्यम्॥ ७॥

किञ्च,

नेत्राख्यप्रावृषेण्याम्बुदपटलगलद्वारिसिक्तस्तनाग्रा
श्वासाभिख्याग्निकीलाग्रसिरुचिलसद्धूमजालप्रकीर्णा।
वागेव स्फूर्जथुस्स्याद्धरणिनिपतिता जातरूपोपमाङ्गी
शान्तिस्तस्मिन्प्रदेशे सुचकितकुररीवोच्चकैस्सा रुरोद॥ ८॥

एवं चिन्ताशोकव्याकुलितस्वान्ता शान्तिरपि विगतमुखकान्तिसन्ततिः तरुणारुणकमलतुलितपाणितला जितपूर्णेन्दुमुखी मुहूर्तमात्रप्राप्तमूर्च्छां विज्ञापयामास ।

शनैर्विद्ययोज्जीवितेयं सख्या शान्त्याख्यया तथा ।
लेभे गतव्यथा साध्वी स्वचैतन्यं शनैश्शनैः ॥ ९ ॥

शिशिरसमापतदतिशिरहिमकणगणानुषङ्गमलिनीकृता कमलिन्याः दीधितिरिव विद्या सुतावियोगव्याकुलिता भीत्या स्वेदोदयादिलक्षणा, चकितकुरङ्गीक्षणा, स्वभर्तुस्समाचरितप्रणाममिव विद्यापि शान्तिप्रवर्तितविविधशिशिरोपचारजातमुपलभ्य समुच्छ्वसिता शान्तिमिदमवदत् ।

[विद्या]—अयि शान्ते, त्वया कृतशिशिरोपचारेणाहं पुनर्जीवितास्मि। पूर्वविदितक्षपणकवाक्यं स्मारितम्। अयं तु वैदिक इव अवभासमानोऽपि परित्यक्तयावद्वैदिकमर्यादस्तिष्ठति। एतद्भाष्यकृदुदाहृतश्रुतिस्मृतीतिहासपुराणवचनानि तत्र तत्र नोपलभ्यन्ते। किं भावयोजिततत्तदाचारादिकानि शास्त्राणि समाकलितानि ?[1] ।

(नेपथ्ये)

आः कुटिलचटुलापटुवचोनटनमात्राकुलिताशेषाम्नायसमयमषीमलीमसमध्यभागोज्ज्वलद्गोपीचन्दनविरचितनासाग्रावधिकेशपर्यन्तानुव्याप्तोर्ध्वपुण्ड्रविलसितललाटः मौनावलम्बनपटुः कोऽपि मध्वभक्तो हठात्तिष्ठतु। मत्सन्निधावप्येवमेव वक्तुं तथोचितं किम्। इतः परं मौनमेवालम्बय। तथैवाभियुक्ता अपि वदन्ति। तथा हि;—

[2]"स्वायत्तमेकान्तहितं विधात्रा
विनिर्मितं [छाद]नमज्ञतायाः ।
विशेषतस्सर्वविदां समाजे
विभूषणं मौनमपण्डितानाम् ॥" इति ॥ १० ॥

---

[1] ततः 'तद्वेदाङ्गभाव; ?' इति वाक्यमप्यस्ति।

[2] भर्तृहरेरिदं पद्यम् ।

[माध्व]वटुः—रे रे श्वेतमृत्तिकारचितछिद्रोर्ध्वपुण्ड्रोल्लसत्फालफलक ! सर्वथा सम्यक्पराभिमतार्थजातमालोच्यैवोत्तरं[1] वक्तव्यम्। तथैवाभियुक्ता अपि वदन्ति; "पराभिमतमज्ञात्वा नोत्तरं प्रवदेत् बुधः" इति। ततस्त्वामहं पृच्छामि। कोऽयमुत्तरकुमार इव। तेन वा किं किमुक्तमबलासन्निधौ तत्तत्सर्वमुच्यताम्।

[श्रीवैष्णव]वटुः—माध्व, श्रूयतां सावधानेन। द्यूते दुर्योधनपराजिताः पाण्डवाः त्रयोदश वत्सरान् वनेषूषित्वैकवत्सरं जनताऽविदिताः जनपदेष्वेव वसाम इति प्रतिज्ञाय त्रयोदश वत्सरेषु गतेषु अज्ञातवासं वसत्सु संवत्सरनिस्तरणाय निर्बाधविबुधसम्बाधं विचित्ररत्नतोरणविन्यस्तहेमकवाटं विराटनगरमुपागताः। तत्समयसमुन्मूलनाय अनावृष्टिराहित्यसर्वसस्यसमृद्ध्यादिलिङ्गैर्विराटनगरं पाण्डवावासं निश्चित्य अनेकबलपरिवृतेन दुर्योधनेन उत्तरगोग्रहणं कृतम्। पूर्वेद्युस्सुशर्मादिचरितदक्षिणगोग्रहणार्थं तत्संरक्षणार्थं पाण्डवचतुष्टयसहिते सबले विराटे याते, दुर्योधनगृहीतगोगणाः औत्तराः पराजिताः गोपालाः; वनितामण्डलमध्यवर्तिनं भूमण्डलाखण्डलविराटतनयमेवमवदन्;—

भीष्मद्रोणादिमुख्यैरतिरथसुभटैस्संवृतो राजराजो
योद्धा दुर्योधनाख्यः पशुगणमहरत्सर्वमेवास्मदीयम्।
नास्माकं शक्तिरस्ति त्वमतिरथवरः कार्मुकं हेमपुङ्खान्
बाणान्वर्मासिमुख्यायुधनिचयमिदं त्वं गृहाणाऽऽशु राजन् ॥११॥

एवं गोपालकसमुदीरितोत्तराण्युत्तरकुमारो निशम्य बृहन्नलावेषधारिणमर्जुनं सारथिं कृत्वा उत्तराभिमुखस्सन्नगरान्निष्क्रान्तः।

नानाविग्रहसङ्कुलं ध्वजपटप्रोद्भूतवीच्यावृतां
वेतण्डाभिधगण्डशैलकलितां धुर्योधनाब्धिं गताम्।
दृष्ट्वा तां परवाहिनीं नृपसुतस्स्वस्यन्दनप्रेरकं
भीतं मां कृपयाऽऽशु मातृभवनं सम्पत्समृद्धं नय ॥ १२ ॥

---

[1] 'देयम्' इत्यपि वर्तते।

अपि च, भो भो बृहन्नले, यदि मां मद्भवनं नयसि चेत्तवाहमद्यैव बहुजनपदाष्टापदराशिसुवर्णसुखासनबहुविधविचित्राम्बराणि प्रदास्यामीत्येवं विललापेत्यादि। तद्वत्त्वमपि वनितासन्निधौ कार्याकार्यविवेकहीनं विज्ञानप्रयुक्ताशेषवृत्तान्तं अस्मत्पुरतः पठसि।

[कविवचनम्]—(इत्यवोचत्। माध्ववटुरपि किमनेन धूर्तेन सर्वथाऽस्माकमपसर्पणमेव श्रेयस्करमिति निष्क्रान्तः)

विद्या—आर्य! भवतस्सदा कुशलमेव भूयात्। नासम्भाष्यः श्रोत्रियोऽप्यत्र। ब्रह्मज्ञानप्रकाशितसिद्धान्तशास्त्रादरण्योषितयोरबलयोरावयोरशेषवृत्तान्तं ज्ञात्वैव गन्तव्यमिति।

वटुः—कुमारि! भवदभिमतं तथैव करवाणि। (इत्युपविष्टोऽभूत्)

विद्या—इयं हि शान्तिनाम्नी कन्यका, खेदमोदसहचारिणी मत्सखी। मामतिवृद्धजनाः विद्याभिधां फणन्ति। अहमिमां गृहीत्वा मत्सुतां भक्तिकन्यकामन्वेष्टुमागताऽस्मि। ममान्वेषयन्त्याः बहुतिथः कालो यातः। सा मच्चक्षुषोर्नातिथीकृता। दुर्योधनसभान्तराले पराभूतायाः द्रौपद्याः श्रीकृष्ण इव त्वमावयोः प्रादुर्भूतः।

वटुः—(विहस्य)

रुक्मिणी सत्यभामा च युवामेव न संशयः।
नो चेत्कथं नु युवयोरीदृक्सौन्दर्यमुत्तमम् ॥ १३ ॥

विद्या—(स्वगतम्)

विपत्काले प्राप्ते सकलजनतात्यन्तभयदे
समुदयत्पूर्णेन्दुप्रतिभटमुखीभिर्युवतिभिः।
परित्यक्त्वा गन्तुं पुरुषवरसाम्यं समुचितं
न युक्तं चेत्याहुर्नयपथविदस्सन्मुनिगणाः ॥ १४ ॥

[कविवचनम्]—किञ्च, आभङ्गुरवागुरादिविविधायुधसाधनासाधनसन्नद्धमृगयुसन्दर्शनसंक्षुभितहृदया कुरङ्गीव शान्त्यभिख्या स्वसखीमुखं मुहुर्मुहुर्निरीक्षमाणा बाष्पपूरपरिगद्गदितकण्ठी विदया किमद्यास्माकं कर्त-

व्यमिति बहुधा मनस्यनुचिन्तयामास। शान्त्याख्या सुनयनाऽपि नर्मगर्भितवटुवचनाकर्णनसंक्षुब्धा स्वनयने विस्तार्य दूरादागच्छन्तं कञ्चित्पुरुषमवलोक्य,

[शान्तिः]—अयि विद्ये, इतःपरं त्वया न भेतव्यम्। पश्य, कश्चिद्दूरादायाति।

[कविवचनम्]—विद्याऽपि तं निरीक्ष्य तद्विस्रब्धा वेपमानाङ्गी तस्थौ। एतस्मिन्नन्तरे सोऽपि तत्समीपमेवागतः।

गङ्गाकूलजमृत्तिकाविरचितस्थूलोर्ध्वपुण्ड्रोपरि
आजङ्घासितसत्त्रिपुण्ड्रकलितस्नातस्सुधौताम्बरः।
रुद्राक्षैस्तुलसीप्रकाण्डशकलैस्सच्छिद्रितोरःस्थल
स्तद्भाग्योदितदेवताकरुणया वृद्धः पुरस्संस्थितः॥ १५॥

वृद्धः—(समागत्य) अयि सुभ्रुवौ के युवाम्?। कोऽयं युवा भवन्निकटे पाटच्चर इव नटति?।

वटुः—(सक्रोधम्) कुटिल, चटुलवचोनिकराकर, दुर्बुद्धे, मुकुरप्रतिफलित-मुखादिप्रतिबिम्बवदशेषमपि जगन्मिथ्येति वदसि। भवत्ताद्दङ्मिथ्या-वचनोक्तौ कोऽतिभारः।

वृद्धः—(विहस्य) वटो, साधु, भवत्सिद्धान्तोऽनूद्यताम्। आकर्णयामि।

वटुः—

स्थूलं सूक्ष्मं च विश्वं चिदचिदिति पुनर्द्विप्रकारेण भिन्नं
सर्वेषामन्तरात्मा परपुरुषवरस्तद्विशिष्टोऽद्वितीयः।
गीताशास्त्रैकबोध्या भगवति परमे साधनं नः प्रपत्तिः
मुक्तिर्लोकोर्ध्वभागस्थितपरमपदप्राप्तिरावृत्तिहीना॥ १६॥

अशेषप्रपन्नापद्वारणनिवारणकण्ठीरवे समस्तजगत्कारणे निष्कारणे वासुदेवे सति तमपहाय देवतान्तरभजनं न कार्यम्। शिवनिन्दा-चरणमेव भगवदाराधनम्।

निन्दा शिवस्य हरिनामजपेन तुल्या
श्रीवैष्णवोत्तमगणाः प्रवदन्ति लोके।

श्रीपादतीर्थपरिषेचनमेव तुल्यं
गङ्गादिपुण्यसरिदम्भसि मज्जनेन ॥ १७ ॥

[कविवचनम्]—

वृद्धोऽयं धीसमृद्धः कुटिलितभ्रुकुटिः पाटलात्मीयवक्त्रः
कोपाटोपातिलेपस्फुरदधरपुटः प्रान्तरक्तान्तनेत्रः ।
दण्डाघातातिकुप्यद्विषधरसदृशो निःश्वसन् दीर्घदीर्घं
नासाविन्यस्तहस्ताङ्गुलिरनिशमिदं चिन्तयामास चित्ते ॥ १८ ॥

[स्वगतम्] अहो दौरात्म्यमस्य, पुनरप्यस्यैव सिद्धान्तभागाना-कलयामि ।

वृद्धः—वटो, भूयोऽपि भवतस्सिद्धान्तभागानाकलयामि ।

वटुः—वृद्धब्राह्मण! अस्मत्सिद्धान्तभागान् कथयामि। श्रूयताम्। शुण्डा-दण्डसमानभुजदण्डमूलशङ्खचक्राङ्कनकिणमुद्रितजनहृद्यप्राक्समुद्रवेला-वस्थितनीलाचलनिवसज्जगन्नाथार्पितविविधान्नभक्ष्यजातमण्डजचण्डिल-चण्डालचर्चितावशिष्टं यच्छरावगतम्। 'चण्डालवाटिकायां वा मत्प्रसादं सुपावनमि'ति भगवद्वाक्यावगतपावित्र्यं सर्वेऽपि शिष्टजनाः गृह्णन्ति। तदालोच्यास्मन्मतप्रवर्तको रामानुजाचार्य एकोत्तरशतस्थलेषु भगवत्प्र-सादभावनमनिन्दितमित्यङ्गीचकार। तद्भक्तिश्रद्धासध्रीचीनास्तदालोच्य भगवद्विनिर्मितपाञ्चरात्रार्थाचरणे प्रचारणचणजनतानन्दसन्धानधुरीण-प्रपन्नस्वजनाशेषकलुषापहरणधुरन्धरकलितशयोदराशेषभुवनोदरदा - मोदराधिष्ठितमानुषप्रतिष्ठितस्थलेषु सर्वत्र सर्ववर्णस्य व्यतिकररहितं भगवत्प्रसादग्रहणमङ्गीचक्रुः। अतस्सर्वोत्तमं मन्मतम्।

वृद्धः—

सालोक्यं प्रवदन्ति किञ्चिदधिकानन्दैकभोगास्पदं
जीवस्यैक्यमुदाहरन्ति कतिचिद्वेदान्तिनस्सुव्रताः ।
द्वैताद्वैतकथां विहाय परमामङ्गीकृतं ब्रह्म यत्
किं तद्ब्रह्म विलक्षणं मतयुगादाख्याहि मे सद्वटो ॥ १९ ॥

'जगन्नाथमहात्म्या'नुपठितवचननिकरसत्तामात्राङ्गीकृतप्रसादग्रहः जग-न्नाथः इति कथं भाष्यकृन्मात्राङ्गीकृतस्वप्रसादग्रहः। कथं वा सर्वायतन-प्रसादसंग्रहः?

[कविवचनम्]—आकर्ण्य वृद्धः कुधियो वितण्डं
समस्तसिद्धान्तविरुद्धमर्थम्।
दुरात्मनामेव जयः प्रपञ्चे
लज्जाविनाशोन्नतभावभाजाम् ॥ २० ॥

वटुः—वृद्धब्राह्मण, स्वत्सिद्धान्तभागोऽनूद्यताम्।

वृद्धः—तथैव भवतु ;—

अविद्यायां ब्रह्म प्रतिफलनतो जीवततयो
ह्यविद्या निर्वाच्या परिणमति विश्वात्मकतया।
स्वमायामाहात्म्याद्धरहरिविरिञ्चास्समभवन्
चितामैक्यं मुक्तिः श्रुतिपदकदम्बश्रवणजा ॥ २१ ॥

किञ्च,

अविद्या जगदाकारपरिणामस्वरूपिणी।
विवृत्तं सदुपादानं ब्रह्म चैतन्यमुत्तमम् ॥ २२ ॥

तत्त्वमस्यादिवाक्यानि स्ववृत्त्या लक्षणाख्यया।
विरुद्धधर्मसंत्यागाच्चितोरैक्यं जगुः परम् ॥ २३ ॥

पञ्चाक्षराष्टाक्षरयोश्शैववैष्णवमन्त्रयोः।
शिवकेशवयोर्नास्ति भेदधीर्बन्धकारिणी ॥ २४ ॥

ततश्च पर्यङ्कोपकोसलदहरसौरादिविद्यासु प्रतिपादितसगुणोपासनायाः भूमोपासनाप्रतिपादितनिर्गुणप्राप्तिहेतुत्वं स्थूलारुन्धतिकान्यायादिति। ततश्च सगुणनिर्गुणपराशेषवेदान्तवाक्यानामेकार्थप्रतिपादकत्वमिति।

विद्या—(स्वगतम्)

सिद्धान्तभागा विविधाः श्रुता मया
सतामनिष्टाः श्रुतिमार्गनिन्दिताः।
सुता सती यत्र सुखेन संस्थिता
वृत्तान्तमेनं कलयामि सज्जनात् ॥ २५ ॥

[कविवचनम्]—

इत्येवं बहुधा विचिन्त्य सुजनानन्दैकसन्दायिनी
शान्तस्वान्तमनन्तपुण्यनिचयप्रदयोतमानाकृतिम् ।
विद्यावद्यविवर्जिताननतता हंसाङ्गनागामिनी
मन्दं मन्दमुपेत्य सा द्विजवरं वृद्धं बभाषे वचः ॥ २६ ॥

[विद्या]—विविधातिपावनसवनविधिविधीयमानसकलदेवताहुतिवसिष्ठप्राज्या-ज्यविलेपननिश्शेषविनाशिताशेषकलुषविराजमानाननमिथ्याविप्रलम्भव-चनालम्बनदुरितपरीतस्वपुत्रप्रवर्तितार्त्विज्यसन्दर्शनकुतूहलपुत्रिकावियु-क्तायाः ममाशेषवृत्तान्तं कथयामि ।

स्वरूपं मे सर्वं कलयितुमशक्तास्सुरगणा
मुनीन्द्राः पादाग्रा[ह]तविविधसार्वज्ञ्यविभवाः ।
इमां विद्यामाहुस्सुरुचिरपदां हंसगमना-
मशेषैस्सद्वर्णैरुपचितशरीरां बहुविधाम् ॥ २७ ॥

वृद्धः—अयि विद्ये, का त्वम् ? कस्य सुताऽसि ?। कस्मिन्पुरुषे त्वं दत्तहृदयासि ?।

विद्या—सदाशिवस्य पञ्चमुखानि सन्ति । सद्योजातवामदेवाघोरतत्पुरुषेशाना-ख्यानि । तत्र सद्योजातादितत्पुरुषान्तमुखचतुष्टयात् निगमाभिधाहं निश्वासरूपेण सञ्जाता । मामतिबालिकां सदाशिवश्चतुर्मुखाय प्रादात् । चतुर्मुखोऽपि ईषत्परिपुष्टां मां द्वैपायनाय । द्वैपायनोऽपि विभक्त तदवयवां मां मुनिभ्यः प्रादात् ।

तत्तत्कार्यवशेन दैवतगणास्सर्वे मया संस्तुताः
व्यर्थं तत्र न मे गभीरहृदयं विश्रान्तमित्यादरात् ।
तात्पर्यग्रहणे ह्युपक्रममुखा यत्र स्थिताष्षड्विधा-
स्तत्रार्थे हृदयं ममाद्य रुचिरं विश्रान्तिमेष्यत्यदः ॥ २८ ॥

उपक्रमादिषड्विधतात्पर्यनिर्णायकप्रमाणसध्रीचीनसमीचीनप्राचीनवाक्या-वगतशिवमाहात्म्या कतिपयार्थवादवचनापातप्रसक्तजगत्कारणभावदेव-तान्तरभक्तकुयुक्तिकलापाकृष्टाहं नानादेशसञ्चारपरिच्छिन्ना शिवभक्त्याख्यम-स्सुतावृत्तान्तं न जानामि ।

अनुजा तनुजां विहाय साध्वी
क्षणमेकत्र न तिष्ठते ध्रुवम् ।
न भवत्यनयोर्वियोगशङ्का
मनसो मार्गमतीत्य तिष्ठति ॥ २९ ॥

वृद्धः—पूर्वं शिवभक्तिकन्या निगमाभिधायाः भवत्याः पुत्रिकेत्युक्ता । इदानीं आगमाभिधायाः भवदनुजाया अपि पुत्रिकेति वदसि । कोऽयं विरुद्धार्थव्यवहारः ? ।

विद्या—किमसाध्यं शिवानुभावस्य ।

द्वैमातुरश्शिवसुतो गणपो बभूव
षाण्मातुरोऽपरसुतश्च षडाननाख्यः ।
एवं वभूव शिवभक्तिरपि प्रसिद्धा
द्वैमातुरा दृढनिबद्धजनानुकम्पा ॥ ३० ॥

वृद्धः— मया पूर्वं तप्तं बहुविधतपो दुष्करतरं
हरिब्रह्मेन्द्राद्यास्सकलदिविजास्तोषितहृदः ।
धनं दत्तं छत्रं मखकृतिकृते ब्राह्मणकरे
यतो विद्या नेयं नयनपदमद्याशु गमिता ॥ ३१ ॥

[कविवचनम्]—

एवं विचिन्त्य मनसा स्वयमग्रजन्मा
साष्टाङ्गमाशु वनितापदयोः पपात ।
आनन्दबाष्पपरिपूरितलोचनान्तो
हर्षप्रकर्षसमुदञ्चितरोमवृन्दः ॥ ३२ ॥

[वृद्धः]—अयि विद्ये, अहं माघकृष्णचतुर्दशीमहोत्सवे श्रीशैलबिलाधीशनिश्शेषदिनेशाशेषामृताशार्चनीयश्रीशैलबिलनिवसन्मल्लिकार्जुनसन्दर्शनाय श्रीगिरिमुपगतः । तेन मया तत्राज्ञानभूपतिं कामक्रोधादिभिस्स्वामात्यैस्सह ज्ञानदीपोदयसमापतत्स्वविनाशपरिहारार्थं बौद्धजैनचार्वाकादिवलैस्सह समागतमाकर्ण्य तत्पक्षपातबलसंक्षयदीक्षितस्सुज्ञानभूपतिः यमनियमादिस्वामात्यपरिवृतः तमेवाचलमचञ्चलोऽभ्यपतदिति श्रुतम् ।

त्वमपि तमेव गिरिवरमनया प्राप्स्यसि चेत्तत्रैव भवत्सुतावृत्तान्तो-
विदितो भवेदिति ममातितरां प्रतिभाति ।

[कविवचनम्]—

विद्या वृद्धविबोधितं सरसहृत्पीयूषधारायितं
वाक्यं स्वीयसमस्तकार्यनिचयप्रद्योतमानोदरम् ।
श्रुत्वाऽऽनन्दजबाष्पपूर्णनयनप्रभ्राजमानानना
शान्त्याख्यां स्वसखीमवेक्ष्य चतुरामेवं बभाषे वचः ॥ ३३ ॥

[विद्या]—अयि शान्ते इतःपरमावाभ्यां कालविलम्बो न कार्यः । यथाहु-
र्वृद्धाः ;

फलोन्मुखे महाकार्ये कलत्रे यौवनोज्ज्वले ।
पक्वसस्यसमृद्धौ च न विलम्बेत बुद्धिमान्, इति ॥ ३४ ॥

(वृद्धोऽपि यथेच्छं निष्क्रान्तः) (कतिचित्पदानि गत्वा)

परिष्कृतान्युन्नतवेदिकायां
निक्षिप्य केचित्तुलसीं सशाखाम् ।
तन्मूलमृच्चिह्नितफालदेशा
नृत्यन्ति रण्डाजनतासहायाः ॥ ३५ ॥

शान्तिः—केयमियं तुलसी यामिमे जनाः प्रदक्षिणीकुर्वन्ति ।

विद्या—तामहं न जानामि। तथाऽपि किञ्चिद्वर्तते ते कथयामि। धरा-
धरसमानधैर्यसम्पन्नेन स्वदेहकान्तिसम्पत्तिपराजितनीलजलधरेण जल-
न्धरेण महासुरेण शिवकेशवयोरमिततिथिके महायुद्धे जाते वृन्दाभि-
धानतत्पत्नीपातिव्रत्यमाहात्म्यविवर्धमानाहीनबलं जलन्धरं जेतुम-
शक्ताभ्यामेतद्विचिन्तितं सर्वथाप्यजय्योऽयमिति।

एवं विचिन्त्य बहुधा मधुकैटभारि-
र्वृन्दाव्रतोपशमनोत्कमना बभूव।
विष्णुर्जलन्धरमहोज्ज्वलवेषधारी
रेमे तया वनितया सुतयेव सिन्धोः ॥ ३६ ॥

बहुकालोपभोगविनाशिते वृन्दापातिव्रत्ये, जलन्धरोऽपि विगतातिबलो रणमूर्ध्नि शिवेन हतः। हतावशिष्टागतस्वभृत्यमुखाद्वृन्दापि स्वभर्तुर्मरणं विज्ञाय स्वसमीपवर्तिनं निजपातिव्रत्यविनाशकरं कपटविटवेषधारिणं चक्रधरं विज्ञाय त्वया तिर्यङ्मनुष्यादियोनिषु जनितव्यमिति शप्त्वा चितिं प्रविवेश। विष्णुरपि वृन्दोपभोगसञ्जातानुरागपरवशहृदयस्तच्चितिदेशे तुलसीरूपेणातिष्ठदिति पौराणिकाः फणन्ति।

एतत्कथाकर्णनजातहर्षान्
हित्वा समस्तान् दहरादिमार्गान्।
बाह्यव्रतासक्तसमस्तभावान्
मूर्खानिमान्पश्य महानुभावे ! ॥ ३७॥

(ततोऽपि किञ्चिद्दूरं गत्वा सखेदं स्नातान् धृतधौताम्बरान् कृताश्वत्थप्रदाक्षिणप्रक्रमणसन्नद्धान् निरीक्ष्य स्वसखीं शान्तिमेवमवादीत्।)

स्नात्वा कूपतटाकवारिकलशेनानीय किञ्चिज्जलं
सिक्त्वाऽश्वत्थतरुं प्रदक्षिणमथो ये पर्यटन्त्यादरात्।
एतान्पूर्वभवेऽतिलग्नयुगसम्बन्धातिदृप्तान् वृषान्
किञ्चिन्निस्सृतमूत्रपङ्किलपथानुत्प्रेक्षयाम्यात्मनि ॥ ३८॥

(कतिपयदूरं गत्वा हरिद्राचूर्णसम्मिश्रितचन्दनचर्चितचारुकलेवरं स्वाङ्गुल्यग्रसंसक्तातिशुद्धस्फटिकाक्षमालं मूलाधारादिषट्चक्रान्तरावस्थितमन्त्रमातृकानुसन्धानविवशान्तःकरणं कञ्चित्पुरुषमवलोक्य तमेवमवादीत् )

अयि ब्रह्मन्, भवत्सिद्धान्तोऽनुवर्ण्यताम्।

ब्राह्मणः—

सिद्धान्तं कथयामि, नाहमधुना युष्मत्स्वरूपं मया
ज्ञातं यत्समयातिलङ्घनधियां नास्मन्मतप्रक्रिया।
वक्तव्या यदि तां ददाम्यभिमता क्रुद्धा भवेद्देवता
तस्माद्गोप्यमिदं मतं मम परं श्रेयोऽर्थिभिस्सज्जनैः ॥ ३९ ॥

तथैवाभियुक्ता वदन्ति। "भ्रष्टः प्रकटिताचारो गुप्तो मुक्तो भवेद्ध्रुवम" इति।

विद्या—तर्हि ब्रह्मन्! तिष्ठतु। आवामपि गच्छावः।

ब्राह्मणः—(स्वगतम्)

इमे राकाचन्द्रप्रतिभटमुखाब्जे सुरदने
तपोवृन्दं सद्यः फलितमभवन्मेऽतिरुचिरम्।
पृथूरोजभ्राजत्तरलतरहारातिरुचिरे
महादेव्यानीते भृगुजदिवसार्चामुदितया ॥ ४० ॥

एते ममापि योगिन्यौ भवेतां पङ्कजानने।
किं रम्भया घृताच्या वा किं तिलोत्तमया मम ॥ ४१ ॥

[कविवचनम्]—

शाक्ताशेषसमस्ततन्त्रकथितन्यासक्रियाकोविदो
हालागन्धसुगन्धिलाननपयोजातः कलञ्जोत्सुकः।
दृप्तः कामचरो जगाद रुचिरे एणीदृशौ सस्मितं
कान्ते, के नु युवामुदारहृदये श्रान्ते विदूराध्वना ॥ ४२ ॥

[ब्राह्मणः]—अयि वनिते, युवयोः विस्रब्धहृदयोऽहमशेषमपि मत्सिद्धान्तं कथयामि।

बिन्दुत्रिकोणवसुकोणदशारयुग्म
मन्वश्रनागदलसंयुतषोडशारैः।
वृत्तत्रयेण धरणीसदनत्रयेण
श्रीचक्रमित्यभिहितं परदेवतायाः ॥ ४३ ॥

एवं निर्जीवचक्रात्मकं महादेव्यावासस्थानं कथितम्। सजीवचक्रस्वरुपं त्वस्माकं परस्परमानसैक्यानन्तरं भवच्छरीरावयवभूतं प्रदर्शयामि। (सम्सम्भ्रमं)

विद्या—कुतन्त्रबोधितवर्त्मानुवर्तनपरः कोऽयं दुष्टहृदयः? सर्वथाऽऽवाभ्यामेव तत्सन्निधौ न स्थातव्यम्। (इति कतिचित्पदानि गत्वा)

[कविवचनम्]

मार्ताण्डमण्डलमुदीक्ष्य मुहुर्नमन्त-
मेकेन पादकमलेन भुवं स्पृशन्तम।
सूर्यप्रकाशनपरारुणमन्त्रपाठा-
सक्तप्रशान्तहृदयं द्विजमाददर्श ॥४४॥

[विद्या—अयि शान्ते, कोऽयं पुरुषः ?। योऽयमरुणकिरणामर्शविघटितार-
विन्दकोरकं मार्ताण्डमण्डलमशेषमन्त्रानुष्ठानपूर्वकं नमस्करोति। तद-
न्यतो गच्छावः।

इति [श्रीमल्लनाराध्यविरचिते शिवलिङ्गसूर्योदयनाटके]

चतुर्थोऽङ्कः।

## अथ पञ्चमोऽङ्कः

(इतः परं श्रीशैलक्षेत्रदर्शनम् ।)

[कविवचनम्]—

विद्या शान्त्याख्यया सख्या प्रभूत श्रीनगोत्तमम् ।
नानादेशाटनश्रान्ता सम्प्राप्तेयं शनैश्शनैः ॥ १ ॥

सन्ध्यारागभ्रमाधायकनानाविधधातुरागसम्भरितदिगन्तरालानतिप्रौढ-पूगीतरुप्रकाण्डसमालिङ्गन्नागवल्लीविराजमानसप्तच्छदरम्भास्तम्भप्रकाण्डानर्गलनिर्गलदतिघनसारपुलिनमध्यपरिस्यन्दमानहिमपूरकुल्यापूर्वापरतीरभूरुह-चन्दनकल्पवृक्षशाखानिबद्धकनकशृङ्खलडोलाखेलनपरसिद्धद्वन्द्वविराजमानं हठ-लम्बिकादियोगनिरतकाञ्चनसूत्रग्रथितसौवर्णपेटिकावकृष्टकरतलविन्यस्तशिव-लिङ्गनिरीक्षणातिव्यग्रसमग्रस्वाध्यायार्थविचारणाचणशैवजनाधिष्ठितं अनुदिना-परसन्ध्यासमयप्रवर्तितश्रीमन्मल्लिकार्जुनपूजामहोत्सवापतद्वसिष्ठवामदेवात्रि-जाबालकण्वकाश्यपादिसकलमुनिजनाकीर्णं नानाविधौषधोपयोगितरुषण्ड-मण्डितकनत्कनकगोपुरोल्लसत्प्राकारसाकारनानाविधायुधोल्लसितकरसाल-भञ्जिकासन्दर्शनातिव्यग्रतैर्थिकसमाजसङ्कुलं श्रीमन्मल्लिकार्जुनमहालिङ्गसन्दर्श-नसत्वरतण्डुदण्डाहतितृटन्मकुटतटनिष्यन्दन्मणिगणाकीर्णवहिर्वितर्दिकाविरा-जमानमल्लिकार्जुनालयद्वारदेशं श्रीशैलनगरमभ्यगात् ।

आगत्योपवने विद्या शान्त्याख्यस्ववयस्यया ।
छायावृक्षं समाश्रित्य श्रान्ता विश्रान्तिमाप सा ॥ २ ॥

सद्योजाताख्यमन्त्रामलचरणसरस्सम्भवद्योतमानां
शान्तां सद्वामदेवाभिधमनुविलसद्द्योतितोरुप्रदेशाम् ।
घोराघोराख्यमन्त्रोदररुचिरुचिरां पूर्वमन्त्राननाब्जां
ईशानाख्योत्तमाङ्गीं गतिजितवरटां बालिकां सन्ददर्श ॥ ३ ॥

बालिका — के युवां वरवर्णिन्यौ चन्द्रबिम्बानने वरे ।
कुचद्वन्द्वपराभूतवियद्गङ्गाब्जकोरके ॥ ४ ॥

विद्या—

विद्याख्यां सखि मामवेहि रुचिरामेणीदृशं सस्मितां
शान्तिं तापसवृन्दबन्धुमनघां पुंस्कोकिलालापिनीम् ।
नानाम्नायशिखाप्रवेशविमुखत्वात्पङ्गुहेतूज्ज्वल-
त्काणाहंकृतिनाशिनीं हरिहरब्रह्मादिभिस्संस्तुताम् ॥ ५ ॥

[कविवचनम्]—नानामन्त्रनिचयचेचीयमानस्वरूपां रूपातिशयानतिशयिततिलोक्यालोकितवनितां मुखकमलाङ्कितकुङ्कुमरेखां रेखञ्चिताधरप्रदेशां बहुतरायासपरिवञ्चितहेलां वालां विद्यैवं पुनरवादीत् ॥

[विद्या]— जाता आवयोस्तव च महाविपिनप्रदेशे सम्भाषणमात्रान्मैत्री। ततोऽहं तर्कयामि सत्यगिरस्ते सन्त इति। ते सन्तस्सख्यं साप्तपदीनमाहुः। अपि च ;

का त्वं क्लान्तासि कान्ते श्रमजलकणसन्मौक्तिकाक्रान्तफाला
श्वासामोदानुधावद्भ्रमरततिनिराकारिहस्ताभिरामा ।
अत्यन्तस्थूलमुक्ताफलगततरलत्वातिगर्वप्रशान्ते(?)–
र्हेतुःश्रीदेहकान्त्या विजितहरगिरिक्षीरपाथोधिफेना ॥ ६ ॥

वाला—अयि विद्ये, भवत्योरहमनुबद्धहृदयैव। भवत्सन्दर्शनादहमद्यापगतश्रमा परिलब्धप्राणाऽस्मि ।

कर्मब्रह्माख्यकाण्डद्वयपरहृदयप्राणिवर्गाहताहं
श्रीमत्पञ्चाक्षराद्याखिलमनुजपसद्वद्भिरुचादृताहम् ।
शक्ता सम्मार्जनेऽहं निटिलतटलसद्वर्णवृन्दस्य जन्तोः
पाषण्डप्राप्तिभीता नगवरमनघं साऽहमापं वरेण्यम् ॥ ७ ॥

अपि च, पूर्वं गोगर्भाद्गोमयरूपेण सञ्जाताऽहम्। तदन्वशेषमन्त्रसंस्कारसंस्कृतपावकसंस्पर्शादिहगानवद्यरूपमापन्ना शिवभक्तिकन्यकासहचारिणी सञ्जाता ।

विद्या—

कुत्र स्थिता सा शिवभक्तिकन्या
मत्पुत्रिका स्निग्धतराऽतिमृद्वी ।

या शाणधारेव मणीन्करोति
शुद्धान् जनान् दोषसमावृताङ्गान् ॥ ८ ॥

[बाला[1]]—भवत्पुत्रिकाप्यत्रैवास्ते । शीघ्रमस्माभिर्गम्यताम् ।

कविवचनम्—इति निश्चित्य ताश्शीघ्रमशेषमुनिनिकरप्रान्तं दुरितलतालवित्रं सकलमुनिनिकरस्तोत्रं श्रीशैलक्षेत्रं ययुः ।

(नेपथ्ये)

कविवचनम्—प्रज्ञा सुज्ञानभूपतिसमीपमागत्य रहस्येवमवादीत् ।

प्रज्ञा—अयि स्वामिन् सुज्ञानभूपते, दिवप्रसादानुकूलवातादिशुभनिमित्तानि दृश्यन्ते । पश्य । अतस्सर्वथाऽस्माकं शुभं भविष्यति इत्युत्प्रेक्षयामि।

(एतस्मिन्नन्तरे रुद्राक्षनामकः कश्चित्पुमान् समायातः)

[कविवचनम्]

समुत्प्रेक्ष्य प्रज्ञा पुरुषवरमायान्तमनघं
ज्वलन्तं तेजोभिर्विविधमुखमेनःप्रशमनम् ।
परिश्रान्तं स्वेदामलजलकणोद्भासिततनुं
हरिब्रह्मादीनां विनिहितपदं मूर्धसु सताम् ॥ ९ ॥

कुशलप्रश्नमधुपर्कप्रदानपूर्वकं, समागतं तं सुखासनोपविष्टं संविधाया-वादीत् ।

प्रज्ञा—

स्फुटितकमलनेत्रश्चन्द्रबिम्बातिरम्या-
ननकुहरचरिष्णुभ्राजिताशेषवेदः ।
रुचिरतरवराङ्गस्त्वं हि कस्माच्च देशा-
दिममगवरमाप्तोऽस्मदाप्तोऽतिरम्यः ॥ १० ॥

अपि च, अस्मच्छ्रवणकुहरद्वयपीयूषायितं वचनजातं वक्तुमागत इव प्रतिभासि ।

---

[1] 'शिवभक्तिः' इतिवर्तते ।

[रुद्राक्षः]—अयि प्रज्ञे, सुज्ञानभूपतेः कुशलमव्याहतम्। तत्समीपानपायिन्यास्तवापि कुशलमेव खलु।

[प्रज्ञा]—भवदनुग्रहातिरेकेण सर्वेषां जनानां कुशलमव्याहतमेव। सुज्ञानभूपतिरत्रैवावतिष्ठते।

[रुद्राक्षः]—अयि प्रज्ञे, समागतं मां सुज्ञानप्रभुसार्वभौमाय निवेदय।

प्रज्ञा—प्रविश्याशेषं कथयामि। (प्रज्ञाऽपि स्वसपत्नीं बुद्धिं आहूय) अयि अनुजे, त्वं मद्भर्तृसमीपं गत्वा समागतोऽयमिति निवेदय।

[कविवचनम्]—इत्यादिदेश। साऽपि तथैवाकरोत्। ततस्तदनुमत्या तमेव प्रभुसमीपं निनाय। रुद्राक्षपुरुषोऽपि तदादिष्टः तत्समीपावस्थितहिरण्मयपीठोपविष्टस्तदनुज्ञामवाप्यैवमवादीत।

रुद्राक्षः—

रुद्राक्षाख्यस्तव सहचरः पादपीठप्रदेशं
द्रष्टुं तूर्णं समुपगतवान्नौभिरुल्लङ्घ्य सिन्धुम्।
विद्या-शान्ती बहिरुपवने तिष्ठतो भूतिदेव्या
सर्वं तुभ्यं निगदितुमहं बोधितस्ताभिरेवम्॥ ११॥

सुज्ञानसाम्राट्[1]—अस्माकमतीव हृद्यतरमुत्तरं भवताभिहितम्। हे वटो सर्वथा त्वामहं जानामि। सुरासुराजेयत्रिपुरसंहारोद्युक्तस्य परमकारुणिकस्य परमेश्वरस्य नेत्रकमलेभ्यो जलबिन्दवः निपतिताः। तेभ्यः त्वत्कुलं प्रसूतमिति।

रुद्राक्षः—भो भोः सुज्ञानसार्वभौम, त्वं सर्वज्ञोऽसि। मद्वृत्तान्तपरिज्ञाने कोऽतिभारः। महाराजः, सत्वरमादिश्यताम्।

सुज्ञानः—(स्वपत्नीं बुद्धिमाहूय) त्वया सत्वरं गम्यताम्। ताश्च मदन्तिकमानेतव्याः। (इति आदिष्टवान्)

---

[1] विज्ञानमहाराट् इति वर्तते।

बुद्धिः—

नानारत्नस्थगितकलशोद्भासिभूषाभिरामा
चन्द्रज्योत्स्नाविशदवसनप्राकृताशेषगात्री।
बुद्धिर्योषाजनपरिवृता कोकिलालापिनी या
श्रोणीभारादलसगमना मन्दमन्दं प्रतस्थे॥ १२॥

[कविवचनम्]—बुद्धिस्तदधिष्ठितोपवनं प्रविश्य विद्यायाः पत्रावलिं, शान्तेस्स्वान्तं, विभूतेर्विमलजलं च दत्वा, स्वयमपि तद्दत्तविमलाम्बरसम्बद्धा ताभिस्साकं पुनरपि सुज्ञानमहाराजसमीपमाजगाम।

सुज्ञानः—

अज्ञानाख्यमहीपतिर्मम रिपुः कामादिभिश्चोत्थितै-
रस्मत्सङ्क्षयकारिकार्यकरणव्यग्रैरुदग्राशयैः।
आस्ते कल्मषपङ्कपङ्किलमनास्सम्मन्त्रयन्सर्वदा
कार्यं किन्नु विचारणीयमधुना युष्माभिरप्युत्सुकैः॥ १३॥

अतोऽहं तर्कयामि। तत्कार्यसाधने विद्यैव चतुरा। अयि विद्ये, एतत्कार्यप्रशमनोपायो भवत्यैवोच्यताम्।

विद्या—

अज्ञानभूपतिबलेषु महारथेषु
कामस्सुमास्त्रकलितोऽतिरथोऽतिदृप्तः।
यूथेषु पाण्डवकुरुप्रवरेष्विवैको
गाण्डीवकार्मुकधरः पुरुहूतपुत्रः॥ १४॥

अतस्सर्वथाऽजय्योऽयम्। त्वयैवात्रोपायो विचिन्त्यताम्। तस्मिन् विजिते क्रोधलोभादयोऽपि नष्टप्राया एव।

सुज्ञानः—

विद्ये, त्वमेव शक्तासि विजये बलवद्रिपोः।
राकाचन्द्रप्रभैवालं निदाघार्त्युपशान्तये॥ १५॥

कामे विजिते क्रोधलोभमोहादिप्रचारस्य कामायत्तत्वेन कामज़य एवावश्यकः।

जानीमहे वयमपि प्रतिसार्वभौमं
कामं प्रसूनशरवश्चितसर्वलोकम्।
किं नः प्रयोजनममुष्य कथाप्रसङ्गै-
रत्यद्भुतैस्सकलविस्मयकृद्भिरेतैः॥ १६॥

विद्या—साधु साधु महाराज. अतिप्रज्ञासमुत्सारिताशेषारातिस्वर्गापवर्गहेतुभूतभविष्यद्वर्तमानपरिज्ञानबलवत्परिपन्थिबन्धुकन्धरद्विधाकरणोपायपरिज्ञानचतुरोऽपि मादृशाबलाजनबहुमानक्रियातिव्यग्रमनास्त्वमेवमेतमर्थमापृच्छसि। अतस्सर्वज्ञस्य भवतः कार्यमविदितं नास्त्येव। तथापि निगूढं किञ्चित्कार्यजातमस्ति। सावधानेन श्रूयताम्।

रामश्शक्रजिदीरितश्वसनभुक्पाशैर्निबद्धो दृढं
पत्रीभूतसुपर्णसंस्मृतिमिव त्वं विस्मरस्यद्य तत।
यद्धस्तामलकोज्ज्वलं रिपुमनःकार्कश्यविध्वंसकं
सर्वाम्नायशिखान्तरस्थितवचस्तात्पर्यविद्भिः कृतम्॥ १७॥

सुज्ञानः—अम्ब, किं तत्कार्यं विदितमपि यदस्माभिर्विस्मृतमित्युक्तम्।

विद्या—तत्कार्यं त्वत्पत्नी प्रज्ञापि जानाति।

[कविवचनम्[1]]—

वक्षोजभारभरणातिविनम्रमध्यां
कौशेयचित्रवसनस्थगिताङ्गयष्टिम्।
धाराधराभकबरीं विजितेन्दुवक्त्रां
सुज्ञानभूपतिरिदं महिषीमुवाच॥ १८॥

[सुज्ञानः]—अयि प्रज्ञे, भवद्भिर्विदितमपि वृत्तान्तं ममापि त्वं न कथयसि। किमेतत्?।

---

[1] अत्र 'सुज्ञानः' इति वर्तते।

प्रज्ञा—

अवसरे कथिताऽपि सरस्वती
गुणगणाद्रहिताऽपि विभात्यलम्।
असमये सगुणाऽपि न राजते
श्रुतिकथेव विदग्धवधूरते॥ १९ ॥

अथवा तिष्ठत्वलं अवसरानवसरविचारः। पूर्वं विद्यासन्निधानाभावेन तन्नवनवोन्मेषसंविधानचतुराया मम सामर्थ्यमेव नासीत्। इदानीं तु तत्सन्निधानेन सर्वमपि वृत्तान्तं कथयामि।

क्रियाशक्तिज्ञानशक्ती पत्न्यौ द्वे परमेशितुः।
मलिनामलिनादर्शपश्चात्प्राग्भागतुल्ययोः ॥ २० ॥
क्रियाशक्तिज्ञानशक्त्योरन्तःकरणभागयोः।
प्रतिबिम्बे स्फुरन्नीशः कर्ता ज्ञातेति कथ्यते, इति ॥ २१ ॥

यावत्क्रियाशक्तिविकासं संसारानुवृत्तिः। तदनुवृत्त्या कामादयो लब्धोद्योगा भवन्ति। बहुभवसम्पादिताशेषसुकृतपरिपाकेन क्रियाशक्तौ ज्ञानशक्तिभागे लयावस्थापन्नाऽऽर्या शिवभक्तिरुत्पद्यते[2]। उत्पन्नया तया अस्मत्कार्यं निष्पन्नप्रायं भविष्यति।

[कविवचनम्]—सुज्ञानोऽपि दश दिशोऽवलोक्य प्रज्ञामेवमवादीत्।

[सुज्ञानः]—

तरुणतरणिघृष्टयुद्घाटिताम्भोजनेत्रा
स्मितरुचिजितराकाचन्द्रिका कोमलाङ्गी।
श्रमजलकणदिग्धा केयमायाति मुग्धा
गतिविजितमराल्यावर्तगम्भीरनाभिः॥ २२ ॥

विद्या—सखि प्रज्ञे, दूरादायान्तीयमबला मत्पुत्रिका शिवभक्तिरेव भविष्यति। त्वमत्यन्तमवहिता विलोकय।

प्रज्ञा—(सविमर्शं) नूनं त्वत्पुत्रिकेयं समायाति।

---

[2] ततश्च 'त्वया च अस्मत्कुलमिति वृद्धिमेष्यति' इति वाक्यमस्ति।

[कविवचनम् ][1]—

हर्षबाष्पपरिपूर्णलोचना
प्रीतिकण्टकितरोमसन्ततिः ।
पुत्रिकामभिययौ दिनलक्ष्मीः
पङ्कजश्रियमिवाखिलहृद्याम् ॥ २३ ॥

विद्या पञ्चषट्पदानि गत्वा समायान्तीं शिवभक्तिकन्यां आलिङ्गितवती

तरुणतरणिघृष्ट्युद्घाटिताब्जाननश्रीः
कुवलयदलनेत्रा दाडिमीबीजदन्ता ।
विलसितशिवभक्तिर्विश्वविख्यातमूर्तिः
सदयहृदयविद्यापादयोस्सा पपात ॥ २४ ॥

विद्याऽपि स्वपादपद्मनिपतितां शिवभक्तिकन्यां स्वहस्ताभ्यामुत्थाय

तां पादपद्मपतितां शिवभक्तिकन्या-
मुत्थाप्य कोमलकरद्वितयेन विद्या ।
सौभाग्यगौरवपराजितकेशवेश-
पत्नीमुवाच जितकोकिलवाक्प्रहृष्टा ॥ २५ ॥

**विद्या**—अयि तनये, शिवभक्तिकन्ये, सुज्ञानभूपतिसमीपं गच्छ गच्छ । (इत्युक्तवती)

[कविवचनम् ]—

दूरप्रदेशलिखितोज्ज्वललिङ्गमूर्तिं
सौवर्णदीपितकवाटविराजमानम् ।
सुज्ञानभूपतिनिकेतनमत्युदारं
सद्विद्यया सह विवेश शिवस्य भक्तिः ॥ २६ ॥

सुज्ञानभूपतिरपि शीघ्रमागतां शिवभक्तिं गाढमालिङ्ग्य विविधोपचार-पूर्वकानर्घमणिनिकरखचितसुवर्णभूषणाम्बरचयप्रदानसञ्जातनिस्सीमानन्दसन्दोहनिवासपटुस्वहृदयकुहरां विधाय कनकासनोपविष्टां च संविधाय हर्षगद्गदितकण्ठस्तामेवं जगाद ।

[1] अत्र 'विद्या' इति वर्तते ।

(सुज्ञानभूपतिः)—

जानामि त्वां परशिवपदप्राप्तिहेतुं मनोज्ञां
स्वाज्ञाताख्यत्रिगुणितमहापाशबद्धानुकम्पाम् ।
स्वात्मारामोत्तमजनसमाराध्यमानाममवन्ध्यां
शान्तस्वान्तां परमशिवसद्भक्तिनाम्नीं मनोज्ञाम् ॥ २७ ॥

विद्या—युष्मद्विचार्यमाणाशेषवृत्तान्तमहं जानामि। किमनया विचारकथया। अज्ञानभूपतेः कामक्रोधाद्यमात्यसहितस्य विजयार्थं सत्वरमभियातव्यम्। तत्र अतिप्रगल्भा पञ्चाक्षरीकन्या सा आनेतव्या। तत्र शान्तिरेव अतिप्रगल्भा।

कविवचनम् ]—

सुज्ञानः शान्तिकन्यां कुवलयदलजिन्नेत्रयुग्माभिरामां
बिम्बोष्ठव्यापिमन्दस्मितरुचिरुचिरां मञ्जुमञ्जीरपादाम्।
सम्भाव्येत्थं बभाषे मधुकरविजयोद्युक्तवेणीं मनोज्ञां
शान्तस्वान्तामनन्तां शुकपिकमधुरालापिनीं कम्बुकण्ठीम् ॥ २८ ॥

[सुज्ञानभूपतिः]—अयि शान्ते, सत्वरं गत्वा पञ्चाक्षरीकन्यकामानय।

[कविवचनम्]—शान्तिरपि कतिचित्पदानि गत्वा श्रीशैलशिखरावस्थितसु-ज्ञानमहाराजसमीपमायान्तीं सन्ददर्श।

आचारलिङ्गगुरुलिङ्गपदद्वयेन
विभ्राजितां च शिवलिङ्गमहोदराढ्याम् ।
कान्तां चराभिधसुलिङ्गघन(महा)प्रसाद-
लिङ्गान्वितामलभुजां सुमहोत्तमाङ्गीम् ॥ २९ ॥

शान्तिरपि स्वाभिमुखमायान्तीमेनामेनःप्रशमनासाधारणकरणभूतां भूतपञ्चकविध्वंसीकरणविचक्षणपञ्चाक्षरीयमिति निश्चित्य तदभिमुखं गत्वा सत्वरमाश्लिष्य, अयि पञ्चाक्षरीकन्ये ! सुज्ञानमहाराजनिकट-मावाभ्यां गन्तव्यम् ।

नानारत्नविचित्रतोरणसमीपोद्भासिरम्भाद्रुमं
सौवर्णार्गलयुग्मयुक्तमररप्रद्योतमानं परम् ।
शुद्धस्फाटिकभक्तिदेशविलसल्लिङ्गद्वयोद्भासितं
सुज्ञानस्य निकेतनं प्रणवयुक्पञ्चाक्षरी प्राप सा ॥ ३० ॥

सुज्ञानोऽपि शान्त्या साकमायातां षडक्षरीमर्घ्यपाद्याद्युपचारैरभ्यर्च्य सुखोपविष्टामेवमावभाषे ।

[सुज्ञानभूपतिः]—

अज्ञानभूपतिरयं स्वयमेकवीरः
कामादिभिश्च सचिवैः प्रबलैस्समेतः ।
शुष्कद्रुमं दहति वह्निरुदर्चिरेकः
चण्डप्रभञ्जनयुतो न करोति किं वा ॥ ३१ ॥

शूरस्समीक्ष्य रिपुसैन्यमुदारसत्त्वं
प्राणान्न चिन्तयति मानधनार्जनोत्कः ।
वैराटगोग्रहरतान्विनिहन्तुमेक-
स्तूर्णं ययौ सुरनदीतनयादियोधान् ॥ ३२ ॥

अतश्शत्रुजनालम्भे सोऽयं कालविलम्बो न कार्यः । अयि षडक्षरि, तर्हि रिपुविजयाय शीघ्रं सन्नह्यताम् ।

षडक्षरी—विकलसाधनानामस्माकं नायमभियानकालः ।

सुज्ञानः—किं तत्साधनं त्वयाऽस्माकं यद्विकलमित्युक्तम् ।

षडक्षरी—

मन्दं मन्दं निगदति वचश्चातको वामभागे
शीतो वातस्सुरुचिरमलश्चानुकूलोऽपि वाति ।
कूजंत्यद्य श्रुतिसुखमसौ मञ्जुवाग्बर्हिणौघो
राजन्नेवं फलवति गतौ सूचकान्याविरासन् ॥ ३३ ॥

अतोऽस्माकं सदनुरूपसाधनसम्पत्तौ विजयोऽवश्यं भविष्यति । तत्सा-धनाय यतताम् ।

(नेपथ्ये)

कविवचनम्—

परिहृत्य कलां चान्द्रीं स्वीकृत्यैकं मुखाम्बुजम् ।
सर्वज्ञतादिकलितस्तूर्णमभ्याययौ पुमान् ॥ ३४ ॥

विद्याशान्तिविभूतिमुख्यवनितावृन्देन संवेष्टितो
भेरीकाहलवेणुदुन्दुभिमहारावध्वनद्दिङ्मुखः ।
अर्घ्यालङ्कृतपात्ररत्नरुचिभिर्द्योतत्कराम्भोरुहः
सुज्ञानो गुरुमिन्दुमर्णव इव प्रत्युज्जगामादरात् ॥ ३५ ॥

गुरुः—सुज्ञानमहाराज, भवतः कुशलमव्याहतम् ?। विद्याशान्त्यादीनामपि कुशलमेव खलु ।

सुज्ञानः—[भवदनुग्रहेणैव ।]

विद्येयं मुनिवृन्दवन्दितपदा शान्तिश्च सौख्यप्रदा
भूतिःस्निग्धतरातिकोमलतनुस्सेयं विभूतिः परा ।
विद्यैषा च षडक्षरी तु सकृदुच्चारेण बन्धापहा
रुद्राक्षादिसमस्तयोधनिचयस्सोऽयं गुरो[प्रेक्ष्यताम्] ॥ ३६ ॥

भो भो गुरुस्वामिन्! वयमिमे सर्वेऽप्यज्ञानाख्यरिपुविजयसन्नाहसमाकुला एव । तथापि भवदागमनकारणप्रशान्तसंरम्भास्तूष्णीमवस्थिताः ।

गुरुः— वेधाभिधा मम सुता करयोगजाता
मन्त्राभिधा तदनुजाऽखिलविश्वरूपा ।
पुत्री क्रिया तदनुजा शिवलिङ्गसूर्य-
स्तस्यामुदेति जनहृत्तमसां विनेता ॥ ३७ ॥

सुज्ञानः—भो भो गुरुस्वामिन्, वेधा-मनु-क्रियाभिधानानां भवत्पुत्रिकाणां स्वरूपमीदृगिति भवतानुवर्ण्यताम् ।

गुरुः—तदशेषवृत्तान्तं वक्तुं विद्यैव प्रगल्भा ।

विन्यस्य शिष्यशिरसि स्वकराम्बुजात-
मालोकन द्गुरुवरस्य कृपार्द्रदृष्टेः ।
आयाति यत्परशिवत्वमशेषयोगा-
द्वेधाभिधां मम सुतां समुदाहरन्ति ॥ ३८ ॥

एतां सप्रणवामशेषजननीं पञ्चाक्षरीमुज्वलां
सच्छिष्यस्य निगूढमादिशति यत्कर्णे गुरुस्तत्त्ववित् ।
तामाहुश्शिवतत्त्वकोविदजनास्तन्मन्त्रनाम्नीं सुता-
मूचुर्मण्टरकुण्डसंस्मृतिमुखां पुत्रीं क्रियाख्यां पराम् ॥ ३९ ॥

क्रियादीक्षा सेयं सकलगुणसङ्घातसहिता
ह्यविद्यासम्बन्धप्रशमनपरा सज्जनततेः ।
अमुष्यां सञ्जातास्त्रिभुवनजनान्तस्थिततमो-
गणानां पञ्चास्यः प्रथितशिवलिङ्गाख्यतरणिः ॥ ४० ॥

[कविवचनम्]— (उद्यन्ति)

व्यानीलमेनं शिवलिङ्गसूर्यं
सुज्ञानमुख्याः परितुष्टुवुस्ते ।
शिवागमैर्वैदिकवाक्यजातै-
र्मनोहरार्थैर्गुणवादशून्यैः ॥ ४१ ॥

जय जय शिवलिङ्ग ! प्राणलिङ्गाङ्गसङ्ग !
प्रबल चटुलमृत्युप्राणसंहारहेतो !।
विधिहरिपरिमृग्यस्वाङ्घ्रिपद्मोत्तमाङ्ग !
त्रिपुरहर ! नमस्ते पार्वतीप्राणनाथ ॥ ४२ ॥

उदीयमानं शिवलिङ्गमेत-
द्दद्याच्छुभं श्रीबसवेश्वराय ।
श्रीकन्दुकूर्यन्वयदुग्धसिन्धु-
सुधाकरायाखिलसद्गुणाय ॥ ४३ ॥

सुज्ञानप्रमुखास्सदा कुशलिनश्श्रीकन्दुकूर्यन्वये
गुर्वाम्बायुतमल्लिकार्जुनसुतं भक्तौघचिन्तामणिम् ।

रत्नौघैर्बसवेश्वरप्रभुवरं मत्तेभसङ्घैर्हयै-
र्नानारत्नविचित्रभूषणचयैस्संयोजयन्त्यादरात् ॥ ४४ ॥

[1][या]गंटयन्वयसिन्धुशीतकिरणश्रीशारभाराध्यस-
त्पुत्रायामलसद्गुणाय कलये मल्लेश्वराख्याय च ।
द्रष्टॄणां शिवलिङ्गदर्शनसमुद्भूतप्रमोदात्मनां
भूयाल्लिङ्गकटाक्षवीक्षणवशाद्दोब्राह्मणेभ्यश्शुभम् ॥ ४५ ॥

(निष्क्रान्तास्सर्वे)

इति श्रीमल्लनाराध्यविरचिते शिवलिङ्गसूर्योदयनाटके

पञ्चमोऽङ्कः

नाटकं परिसमाप्तम्



---

[1] चा इति वर्तते।

# शिवलिङ्गसूर्योदयस्थसुभाषितानि

पुटसंख्या

1. अग्निहोत्रं त्रयो वेदाः त्रिदण्डं भस्मकुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥ — १४
2. अघटितघटनापटीयसी क्रियाशक्तिः शैलूषीव असन्त्यपि जगन्ति सत्यभूतानीव दर्शयति । महापुरुषमपि वञ्चयति । — १२
3. अवसरे कथितापि सरस्वती
गुणगणाद्रहिताऽपि विभात्यलम् ।
असमये सगुणापि न राजते
श्रुतिकथेव विदग्धवधूरते ॥ — ६१
4. अतिक्षुद्रेऽपि शत्रौ विजिगीषुणा सावधानेन भवितव्यम् । — २४
5. असति मानान्तरविरोधे आर्थवादिकवाक्यैरपि प्रतीतार्थसिद्धिरनिवार्या । — ९
6. ईर्ष्या नाम अन्तःकरणकालुष्यं हि । — ३५
7. एकभर्तृकापि या नारी भवति तस्या अपि निद्रा दुर्लभा । सकललोकवल्लभानां किं पुनः । — २९
8. कार्ये महति सम्प्राप्ते सङ्कटाधायकेऽपि च ।
न त्वराऽऽचरणीयेति प्राहुर्नीतिविशारदाः । — ४०
9. किमप्यात्मनो दोषं लोको जानाति ? । — १०
10. किमसाध्यं शिवानुभावस्य । — ५०
11. किमिति विधौ प्रतिकूले न सम्भाव्यते । — ३३
12. कुलक्षयोद्युक्तानां पापचेतसां स्वप्रसक्तानन्तरभाव्यनर्थपरिगणना कुतः ? । — ९
13. क्षणमात्रं जीवितम् । — ३२
14. 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य न्याय्यो दण्डो विधीयते ॥" — ९
15. न खलु तादृशाः पुण्यशीलाः तादृशीमसम्भवनीयामापदमनुभवन्ति । — ३३
16. न खलु भावानुबद्धं प्रेम कालेन वियोज्यते । — ३०

पुटसंख्या

17. निदाघे सूर्यकिरणाः शुष्यन्ति भुवनत्रयम् ।
पुनस्त एव वर्षन्ति जलं प्रावृषि शीतलम् ॥ ३
18. निर्भर्त्सयन्ति मदयन्ति विडम्बयन्ति
संमोहयन्ति रमयन्ति विषादयन्ति ।
एताः कुरङ्गनयना न समाचरन्ति
संविश्य किं सकरुणं हृदयं नराणाम् ॥ १२
19. निसर्गोपशान्तमेव खलु शैवं तेजः । ३
20. दर्शनमात्रप्रसन्नहृदयानां पुरुषाणां कीदृशं भयम् । २९
21. पराभिमतमज्ञात्वा नोत्तरं प्रवदेद्बुधः । ४४
22. प्रमादो धीमतामपि । ४१
23. फलोन्मुखे महाकार्ये कलत्रे यौवनोज्ज्वले ।
पक्वसस्यसमृद्धौ च न विलम्बेत बुद्धिमान् ॥ ५१
24. बलाबलपरिज्ञानहीनाः खल्वबलाः । ५
25. भवति हि विलयाय जन्म सम्यक्
सहजसमागतदुष्टभावभाजाम् ।
शशधरकिरणान् हि नाशयित्वा
स्वयमनुनाशमवाप कृष्णपक्षः ॥ ९
26. राकाचन्द्रप्रभेवालं निदाघार्त्युपशान्तये । ५९
27. लोके ज्ञातयः स्वफलाभिसन्धिनैव समारब्धमहावैरास्तिष्ठन्ति ।
६
28. विदुषामपि सुज्ञानं तावद्वेदान्तसंभवम् ।
यावद्विलासिनीदृष्टिविशिखा न पतन्ति हि ॥ ४
29. शत्रुरल्पोऽपि भूपानां विपाके सति दुःखकृत् ।
चक्षुः सम्पीडयत्येव सूक्ष्मोऽपि रजसः कणः ॥ २४
30. सत्यगिरस्ते सन्तः । ५६
31. सन्तः सख्यं साप्तपदीनमाहुः । ५६
32. 'स्वायत्तमेकान्तगुणं विधात्रा
विनिर्मितं छादनमज्ञतायाः ।
विशेषतः सर्वविदां समाजे
विभूषणं मौनमपण्डितानाम् ॥' ४२

# शिवलिङ्गसूर्योदयस्थश्लोकादिसूची


| क्रमसंख्या | श्लोकाः | पृष्ठसंख्या | क्रमसंख्या | श्लोकाः | पृष्ठसंख्या |
|---|---|---|---|---|---|
| १ | अग्निहोत्रं त्रयो वेदाः | २४ | २७ | एते ममापि योगिन्यौ | ५३ |
| २ | अङ्कं न्यङ्कुमदाति | ३० | २८ | एवं विचिन्त्य बहुधा | ५१ |
| ३ | अङ्गं रक्तास्थिमांस | २१ | २९ | एवं विचिन्त्य मनसा | ५० |
| ४ | अज्ञानभूपतिबलेषु | ५९ | ३० | कनत्कनककिङ्किणी | २९ |
| ५ | अज्ञानभूपतिरयं | ६४ | ३१ | कपालमालाकलित | ३७ |
| ६ | अज्ञानाख्यमहीपतिः | ५९ | ३२ | कर्मब्रह्माख्यकाण्ड | ५६ |
| ७ | अत्यन्तदुष्टकुलजां | ३० | ३३ | कल्याणाख्यपुरे च | ३ |
| ८ | अनुजां तनुजां | ५० | ३४ | का त्वं क्लान्तासि | ५६ |
| ९ | अनेकजन्मार्जित | ७ | ३५ | कार्ये महति सम्प्राप्ते | ४० |
| १० | अनेकमन्त्रीश्वर | २ | ३६ | कुत्र स्थिता सा | ५६ |
| ११ | अन्यत्र शान्तमनसां | ६ | ३७ | के युवां वरवर्णिन्यौ | ५५ |
| १२ | अमी भावा जाताः | ३५ | ३८ | केयं मातृपिशाचिका | २८ |
| १३ | अवसरे कथितापि | ६१ | ३९ | क्रिया तृतीयक्षण | २१ |
| १४ | अविद्या जगदाकार | ४८ | ४० | क्रियादीक्षा सेयं | ६६ |
| १५ | अविद्यायां ब्रह्मा | ४८ | ४१ | क्रियाशक्तिज्ञानशक्ती | ६१ |
| १६ | असौ क्रियाशक्ति | १० | ४२ | क्रियाशक्तिज्ञानशक्त्योः | ६१ |
| १७ | आकर्ण्य वृद्धः | ४८ | ४३ | क्रियाशक्त्या सोऽयं | १२ |
| १८ | आगत्योपवने विद्या | ५५ | ४४ | क्रोधादहिंसाप्यवनिं | ५ |
| १९ | आचारलिङ्गगुरुलिङ्ग | ६३ | ४५ | क्षणादन्धीकुर्यां | २६ |
| २० | इत्येवं बहुधा विचिन्त्य | ४९ | ४६ | गङ्गाकूलजमृत्तिका | ४६ |
| २१ | इमे राकाचन्द्रप्रतिभट | ५३ | ४७ | गभीरसिद्धान्तमुख | १ |
| २२ | ईशानोऽहमिति | ४१ | ४८ | गुञ्जद्भृङ्गे निकुञ्जे | ३५ |
| २३ | उदीयमानं शिवलिङ्ग | ६६ | ४९ | गुरोरप्यवलिप्तस्य | ९ |
| २४ | एकद्वित्रिशतायुत | २७ | ५० | घनं शरीरं नव | ७ |
| २५ | एतत्कथाकर्णन | ५२ | ५१ | चान्द्रीं कलां निटिल | ७ |
| २६ | एतां सप्रणवामशेष | ६६ | ५२ | जन्तूनां निधनं | २१ |

| क्रमसंख्या | श्लोकाः | पृष्ठसंख्या | क्रमसंख्या | श्लोकाः | पृष्ठसंख्या |
|---|---|---|---|---|---|
| ५३ | जय जय शिवलिङ्ग | ६६ | ८३ | निन्दा शिवस्य | ४६ |
| ५४ | जल्पत्ययं मानधनः | १४ | ८४ | निरीक्षे तं क्रूरं | ३९ |
| ५५ | जानामि त्वां परशिव | ६३ | ८५ | निर्भर्त्सयन्ति मदयन्ति | १२ |
| ५६ | जानीमहे वयमपि | ६० | ८६ | नेत्राख्यप्रावृषेण्य | ४२ |
| ५७ | जीवश्शरीरेन्द्रिय | ७ | ८७ | पञ्चाक्षराष्टाक्षर | ४८ |
| ५८ | जीवेन सङ्गमवाप्य | ७ | ८८ | परिष्कृतात्युन्नत | ५१ |
| ५९ | ज्योतिः शैवमनामयं | ११ | ८९ | परिहृत्य कलां चान्द्रीं | ६५ |
| ६० | ज्वलज्ज्वालामाला | ३८ | ९० | परीरम्भारम्भो | ९ |
| ६१ | ज्ञानेन बसवेशोऽयं | ३ | ९१ | प्रत्येकं च समिच्छ | ३२ |
| ६२ | तत्तत्कार्यवशेन | ४९ | ९२ | प्राणापानाभिघात | ५ |
| ६३ | तत्त्वमस्यादिवाक्यानि | ४८ | ९३ | प्रोत्तस्थुः कनकासनानि | १८ |
| ६४ | तप्त्वा तपः सुतमवाप | १९ | ९४ | फलोन्मुखे महाकार्ये | ५१ |
| ६५ | तरुणतरणिघृष्टि | ६१ | ९५ | बिन्दुत्रिकोणवसु | ५३ |
| ६६ | तरुणतरणिघृष्टि | ६२ | ९६ | ब्रह्माण्डानि लयं ययुः | १८ |
| ६७ | तापत्रयाखिलतुषानल | १२ | ९७ | ब्रह्मापि स्वसुतां | ५ |
| ६८ | तां पदापद्मपतितां | ६२ | ९८ | भवति हि विलयाय | ९ |
| ६९ | त्वमश्लीलस्योक्तौ | ४० | ९० | भस्मोद्धूलितधूसरा | ३२ |
| ७० | दक्षं दीक्षितमध्वरे | २७ | १०० | भीष्मद्रोणादिमुख्यैः | ४४ |
| ७१ | दूरप्रदेशलिखितो | ६२ | १०१ | मज्जापूरितमस्तक | ३८ |
| ७२ | दृढतरपरिरम्भोद्योग | ४ | १०२ | मत्तेभा मदगन्ध | २७ |
| ७३ | द्वैमातुरः शिवसुतो | ५० | १०३ | मन्दं मन्दं निगदति | ६४ |
| ७४ | धाता शारदनीरद | २५ | १०४ | मन्दाः किञ्चन | २२ |
| ७५ | धृत्वा प्रभोर्गुरुतरं | २३ | १०५ | मया पूर्वं तप्तं | ५० |
| ७६ | नानारत्नविचित्रतोरण | ६४ | १०६ | माता सीतेति सीता | १८ |
| ७७ | नानारत्नस्थगित | ५९ | १०७ | मार्ताण्डमण्डलमुदीक्ष्य | ५४ |
| ७८ | नानाविग्रहसङ्कुलं | ४४ | १०८ | मुनीनामीशानो | ४० |
| ७९ | नानेन नूनं नुन्ना | ११ | १०९ | मुहुस्त्रुटितकञ्चुक | ४ |
| ८० | नाकाणि पाणिनिमतं | १५ | ११० | मृचिह्नितोदर | १६ |
| ८१ | नित्यं यस्त्रितयावल | २ | १११ | मौर्वी भृङ्गमयी | ५ |
| ८२ | निदाघे सूर्यकिरणाः | ३ | ११२ | यत्पाणौ शिष्यचित्त | १ |

| क्रमसंख्या | श्लोकाः | पृष्ठसंख्या |
|---|---|---|
| ११३ | यदद्य विस्रम्भ | २३ |
| ११४ | यद्दीक्षा शिवलिङ्ग | १९ |
| ११५ | यया पुराणः | १३ |
| ११६ | यः पूर्वं समुपेत्य | ३० |
| ११७ | यागण्टयन्वयसिन्धु | ६७ |
| ११८ | रथ्याः संमार्जयन्तां | २० |
| ११९ | राजानः स्वकिरीट | १७ |
| १२० | रामः शक्रजिदीरित | ६० |
| १२१ | राष्ट्रं द्राविडमुत्तमं | १७ |
| १२२ | रिङ्गद्राङ्गतरङ्ग | १६ |
| १२३ | रुक्मिणी सत्यभामा च | ४५ |
| १२४ | रुद्राक्षाख्यस्तव | ५८ |
| १२५ | रे रे सङ्गतिमन्तरेण | ३७ |
| १२६ | लोके सन्ति मतान्तराणि | ४२ |
| १२७ | वक्षोजभारभरण | ६० |
| १२८ | वल्मीके घटवत् | १५ |
| १२९ | वाग्देवीमनिशं | २६ |
| १३० | विचित्रमणिकङ्कण | ८ |
| १३१ | विदुषामपि सुज्ञानं | ४ |
| १३२ | विद्याख्यां सखि | ५६ |
| १३३ | विद्यापि तं खलजनं | ३९ |
| १३४ | विद्या वृद्धविबोधितं | ५१ |
| १३५ | विद्या शान्तिविभूति | ६५ |
| १३६ | विद्या शान्त्याख्यया | ५५ |
| १३७ | विद्ये त्वमेव शक्तासि | ५९ |
| १३८ | विद्येयं मुनिबृन्दवन्दित | ६५ |
| १३९ | विन्यस्य शिष्यशिरसि | ६६ |
| १४० | विपत्काले प्राप्ते | ४५ |
| १४१ | विमुक्तशब्दादिसुख | ३१ |
| १४२ | वृद्धोऽयं धीसमृद्धः | ४७ |
| १४३ | वेधाभिधा मम सुता | ६५ |
| १४४ | वेश्याक्रीडासु हाला | १४ |
| १४५ | व्यानीलमेनं शिवलिङ्ग | ६६ |
| १४६ | शत्रुरल्पोऽपि भूपानां | २४ |
| १४७ | शनैर्विद्योजीवितेयं | ४३ |
| १४८ | शरीरान्निष्क्रम्य | २० |
| १४९ | शाक्ताशेषसमस्त | ५३ |
| १५० | शान्त्या समाश्लिष्ट | ४२ |
| १५१ | शाल्यन्नं मृदुलं | ३७ |
| १५२ | शूरः समीक्ष्य रिपु | ६४ |
| १५३ | श्रीमत्पर्वतपट्टम | १ |
| १५४ | श्रीरामचन्द्रमहिषीं | ३३ |
| १५५ | सतां मे सच्छैव | ३४ |
| १५६ | सत्यत्वं च परोक्ष | २१ |
| १५७ | सद्योजाताख्यमन्त्रा | ५५ |
| १५८ | सपर्याभार्यायां | ८ |
| १५९ | समागताः श्राद्धकाले | २२ |
| १६० | समुत्प्रेक्ष्य प्रज्ञा | ५७ |
| १६२ | सर्वप्रत्यक्षसिद्धं | २० |
| १६२ | सालस्कन्धसमुच्छ्रित | १४ |
| १६३ | सालोक्यं प्रवदन्ति | ४७ |
| १६४ | सितत्रिपुण्ड्रोज्ज्वल | १६ |
| १६५ | सिद्धान्तभागाः | ४८ |
| १६६ | सिद्धान्तं कथयामि | ५२ |
| १६७ | सुज्ञानप्रमुखास्सदा | ६६ |
| १६८ | सुज्ञानः शान्तिकन्यां | ६३ |
| १६९ | सुज्ञानः स्ववशचरैः | १० |
| १७० | संक्षुब्धा परमशिवेन | ६ |
| १७१ | संस्मर्यते तु या | ३० |
| १७२ | स्तनभरपरिखिन्न | ५ |

१७३ स्तनाभोगस्फीतां २२
१७४ स्थातुं न सहते ३२
१७५ स्थूलसूक्ष्मचिदचित् १५
१७६ स्थूलं सूक्ष्मं च विश्वं ४६
१७७ स्नात्वा कूपतटाक ५२
१७८ स्फुटितकमलनेत्र ५७
१७९ स्मर्तारो निगदन्ति ४२
१८० स्मितज्योत्स्नादीव्यत् ४
१८१ स्वरूपं मे सर्वं ४९
१८२ स्वायत्तमेकान्तगुणं ४३
१८३ हर्षबाष्पपरिपूर्ण ६२
१८४ हर्षाद्रोषान्निमीलत २२

---

# शुद्धिपत्रिका

| पुटसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|
| १ | पट्टसाग्र | पट्टसाग्र |
| २ | नेपथ्याभि मुख | नेपथ्याभिमुख |
| ३ | सङ्केनआकर्णा | सङ्केन आकर्णा |
| ३ | दृढी कृर्तु | दृढीकर्तु |
| ३ | मेवप्राप्तः | मेव प्राप्तः |
| ९ | स्वयमनुनाश | स्वयमनु नाश |
| १० | सुज्ञा प्रज्ञा | सुज्ञानः प्रज्ञा |
| १५ | इति परिक्रामति | (इति परिक्रामति) |
| १५ | ब्रह्मसूत | ब्रह्मसूत्र |
| १५ | जनतातिकुच्छ्र | जनतातिकृच्छ्र |
| १६ | विभात्यश्रम | विभात्याश्रम |
| २५ | यदादिशाति | यदादिशति |
| २६ | अत्यन्तसमर्थ | अत्यन्तासमर्थ |
| २६ | त्यासकत्या | त्यासक्त्या |
| २६ | तदनधीतत्वमपि ॥ | तदनधीतत्वमपि वा |
| २८ | स्फजथु | स्फूर्जथु |
| ३० | भावानुवद्धं | भावानुबद्धं |
| ३१ | विध्नकराणि | विघ्नकराणि |
| ४७ | यत्त्छरावगतम् । | यच्छरावगतं |
| ५५ | तृटन्मकुट | त्रुटन्मकुट |
| ५९ | बुद्धिः— | कविवचनम् |
| ५१ | [कविवचनम्] | × |
| ६१ | का मादयो | कामादयो |
| ६२ | हस्ताभ्यामुत्थाय | हस्ताभ्यामुत्थाप्य |

WO 21395—MUPM—500 copies—20-8-81